१
भा०च०
टी०
१

॥श्रीगणेशायनमः श्रीकृष्णायनमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदायभक्तजनमानसनिवासायश्रीरा
मायनमः अथैकत्रिंशताध्यायैर्विसर्गस्तुर्यईर्यते विसर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिःकृतः१ तत्रतुप्रथमेध्यायेमनु
कन्याऽन्वयाःपृथक् वर्ण्यतेयत्रयज्ञादिमूर्तिभिःप्रभवोहरेः२ मनुकन्याऽन्वयंविस्तरेणवक्तुमाह मनोस्त्विति चका
रात्द्वौपुत्रौच१ तुशब्दादन्यतोऽपिपुत्रलाभःसूचितस्तद्दर्शयितुमाह पुत्रिकाधर्ममाश्रित्येतिअभ्रातृकांप्रदास्यामि

श्रीगणेशायनमः श्रीमैत्रेयउवाच मनोस्तुशतरूपायांतिस्रःकन्याः
श्चजज्ञिरे आकूतिर्देवहूतिश्चप्र सूतिरितिविश्रुताः१ आकूतिंरु
चयेप्रादादपिभ्रातृमतींनृपःपुत्रि काधर्ममाश्रित्यशतरूपानुमोदि
तः२ प्रजापतिःसभगवानरुचि स्तस्यामजीजनत् मिथुनंब्रह्मव
र्चस्वीपरमेणसमाधिना३ यस्त योःपुरुषःसाक्षाद्विष्णुर्यज्ञस्वरूप
धृक् यास्त्रीसादक्षिणाभूतेरंशभूताऽनपायिनी४ आनिन्येस्वगृहंपुत्र्याःपुत्रंविततरो

तुभ्यंकन्यामलंकृताम् अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदितिभाषाबंधेनकन्यादानंपुत्रिकाध॥चिषम्॥
र्मःसचाभ्रातृकायांकन्यायांपुत्रार्थिनएवप्रसिद्धस्तथापिपुत्रबाहुल्यकामस्तथाकृतवानित्याह भ्रातृमतीमपीति
२ मिथुनंपुरुषंस्त्रियंचसमाधिनाईश्वरध्यानेनभूतेर्लक्ष्म्याअंशभूताअतस्तयोर्विवाहोनविरुद्धइतिभावः४ ॥६॥

रामः
१

७

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

५ यजुषांयज्ञानांमंत्राणांवापतिर्विष्णुः ६ द्विषट्द्वादश ७ प्रसंगात्स्वायंभुवमन्वंतरगतंषड्विधमाह तुषिताइतिद्वाभ्या म्मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वरः ऋषयोंऽशावतारश्चहरेःषड्विधमुच्यतइतिवक्ष्यतितत्रस्वायंभुवोमनुःतु षितादेवाःमरीचिप्रमुखाःसप्तर्षयःयज्ञोहरेरवतारःसएवसुरगणेश्वरइन्द्रः ८ प्रियव्रतोत्तानपादौमनुपुत्रौपृथ्वी

स्वायंभुवोमुदायुक्तोरुचिर्जग्राहदक्षिणाम् ५ तांकामयानांभगवानुवाहयजुषांपतिः
तुष्टायांतोषमापन्नोऽजनयत्द्वादशात्मजान् ६ तोषःप्रतोषःसंतोषोभद्रःशांतिरिड
स्पतिः इध्मःकविर्विभुःस्वह्नःसुदेवोरोचनोद्विषट् ७ तुषितानामतेदेवाआसन्स्वायं
भुवान्तरे मरीचिमिश्राऋषयोयज्ञःसुरगणेश्वरः ८ प्रियव्रतोत्तानपादौमनुपुत्रौमहौ
जसौ तत्पुत्रपौत्रनप्तॄणामनुवृत्तंतदंतरम् ९ देवहूतिमदात्तातकर्दमायात्मजांमनुः
तत्संबंधिश्रुतप्रायंभवतागदतोमम १० दक्षायब्रह्मपुत्रायप्रसूतिंभगवान्मनुः प्राय
च्छद्यत्कृतःसर्गस्त्रिलोक्यांविततोमहान् ११ याःकर्दमसुताःप्रोक्तानवब्रह्मर्षिपत्नयः
तासांप्रसूतिप्रसवंप्रोच्यमानंनिबोधमे १२ पत्नीमरीचेस्तुकलासुषुवेकर्दमात्मजा

पालकौनतुदेवयज्ञस्यहेतुरूप्येणषड्विधत्वंतयोःपुत्रपौत्रनप्तॄणांवंशैरनुवृत्तंव्याप्तंपालितंतत्मन्वंतरम् ९ श्रुत प्रायंबाहुल्येनश्रुतम् तत्कन्यावंशानामश्रुतत्वात्तस्यायंग्रहणम् १० । ११ प्रसूतिप्रसवंपुत्रपौत्रादिभिर्विस्तारम् १२ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यर्योर्वंशो नापूरितंम् १३ कश्यपस्य वंशं षष्टे वक्ष्यति द्वितीयस्य वंशमाह पूर्णिमेति देवकुल्यां नाम कन्यां च हरेः पादशौच

लनाज्जन्मांतरे या दिवः सरिद्गंगाऽभूत् १४ आत्मेश ब्रह्मसंभवान् विष्णुरुद्रब्रह्मणामंशैः संभवान् १५ किंचित् किं

कश्यपं पूर्णिमानं च ययोरापूरितञ्जगत् १३ पूर्णिमासूत विरजं विश्वगं च परन्तप देवकुल्यां हरेः पादशौचाद्याऽभूत्सरिद्दिवः १४ अत्रेः पत्न्यऽनुसूया त्रीञ्जज्ञे सुयशसः सुतान् दत्तं दुर्वाससं सोममात्मेश ब्रह्मसंभवान् १५ विदुर उवाच अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः किंचिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो १६ मैत्रेय उवाच॥ ब्रह्मणा चोदितः सृष्टावत्रिर्ब्रह्मविदांवरः सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः १७ तस्मिन्प्रसूनस्तबकपलाशाशोककानने वार्भिः स्रवद्भिरुद्घुष्टे निर्विंध्यायाः समन्ततः १८ प्राणायामेन संयम्य मनो वर्षशतं मुनिः अतिष्ठदेकपादेन निर्द्वंद्वोऽनिलभोजनः १९ शरणं तं प्रपद्येऽहं य एव जगदीश्वरः प्रजामात्मसमां मह्यं प्रयच्छत्विति चिंतयन् २० तप्यमानं त्रिभुवनं प्राणायामैधसाग्निना निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः २१

स्वित् किं कर्त्तुमिच्छवइतिवा १६ ऋक्षं नामकुलाद्रिं तपसि स्थितः सन् १७ तस्मिन्कुलाद्रौ प्रसूनानां स्तवका येषु प

लाशाशोकेषु तेषां कानने निर्विन्ध्यानामनदी तस्याः स्रवद्भिर्वार्भिरुद्घुष्टे नादिते १८। १९। २० प्राणायाम एव एधः संदीप

कांपकस्मात्तेनमुनेर्मूर्ध्नोनिर्गतेनाग्निनातप्यमानंसमीक्ष्य

तास्मपदंचयुगित्वतोणालयं: २१ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अप्सरःप्रमुखैर्विनायमानंविस्तार्यमाणंयशःयेषांते २२ तेषांप्रादुर्भावःप्राकट्यंतस्यसंयोगःसंनिधिःतेनविद्योतितंमः
नोयस्यउत्तिष्ठनउत्कर्षेणतिष्ठन् २३ अर्हणंपुष्पादिकमंजलौयस्यउपतस्थेपूजयामासवृषाद्यारूढान्स्वैःस्वैश्चिह्नैः।
त्रिशूलकमंडलुचक्रादिभिः २४ कृपयाऽवलोकोयस्मिन्हसच्चतद्वदनंचतेनउपलंभितान्प्रसन्नत्वेनज्ञापितान्ते

अप्सरोमनुगंधर्वसिद्धविद्याधरोरगैः वितायमानयशसस्तदाश्रमपदंययुः २२ तत्प्रा।
दुर्भावसंयोगविद्योतितमनामुनिः उत्तिष्ठन्नेकपादेनददृशेविबुधर्षभान् २३ प्रण।
म्यदंडवद्भूमावुपतस्थेऽर्हणांजलिः वृषहंससुपर्णस्थान्स्वैःस्वैश्चिह्नैश्चचिह्नितान्॥
२४ कृपाऽवलोकेनहसद्वदनेनोपलंभितान् तद्रोचिषाप्रतिहतेनिमील्यमुनिरक्षिणी॥
चेतस्तत्प्रवणंयुंजन्नस्तावीत्संहतांजलिः श्लक्ष्णयासूक्तयावाचासर्वलोकगरीयसः
२६ अत्रिरुवाच विश्वोद्भवस्थितिलयेषुविभज्यमानैर्मायागुणैरनुयुगंविगृहीतदे।
हाः नेब्रह्मविष्णुगिरिशाःप्रणतोस्म्यहंवस्तेभ्यःकएवभवतांमइहोपहूतः २७ एकोम
येहभगवान्विविधप्रधानैश्चित्तीकृतःप्रजननायकथंनुयूयम्॥ २५ तद्रोचिषादीप्त्या २५ श्ल

क्ष्णयामधुरयासूक्तयागंभीरार्थया २६ अनुयुगंकल्पेकल्पेविभज्यगृहीतोदेहोयैस्तेप्रसिद्धाब्रह्मविष्णुगिरि
शा यूयंवःयुष्मान्प्रणतोऽस्मितेभ्यःसकाशादेकएवमेमयाउपहूतःशरणंतंप्रपद्येइत्येकस्यैवनिर्दिष्टत्वात् सच

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्रजननाय पुत्रोत्पत्तये चिन्तीकृतः चिन्तेनैकं नीतः मनसोपि दूरा अगोचराः संतः कथं नु त्रयोऽप्यत्रागताः २८।२९ ते
त्वया यथाकृतः संकल्पस्तेन तथैव भाव्यं नान्यथा यतः तत्संकल्पस्य ते संकल्पः तर्हि कथमेकस्मिन्ध्यायमाने त्रयः
प्रतीतास्य तत्राहुः यदेकं जगदीश्वरात्वं तत्त्वं भवान् ध्यायति ते एते वयं त्रयोऽपि तद्दैवैकं तत्त्वं नास्माकं भेदोस्तीत्य

अत्रागतास्तनुभृतो मनसोऽपि दूराद्ब्रूत प्रसीदत महानिह विस्मयो मे २८ श्रीमैत्रेय उवाच इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो २९ देवा ऊचुः यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम् ३० अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः भवितारोंग भद्रं ते विस्रप्स्यंति च ते यशः ३१ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः सभाजितास्तयोः सम्यग्दंपत्योर्मिषतोस्ततः ३२ सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् दुर्वासाः शंकरस्यांशो निबोधांगिरसः प्रजाः ३३ श्रद्धा त्वंगिरसः पत्नी चतस्रोऽसूत कन्यकाः।

र्थः ३० विस्रप्स्यंति विस्तारयिष्यंति अंतर्भूतणिजर्थस्य सृप्लृगताविसस्य रूपम् ३१ ताभ्यां सम्यक् सभाजिताः पूजिताः संतः ततः स्थानात्प्रतिजग्मुः ३२ अंगिरसः ब्रह्मणस्तृतीयपुत्रस्य निबोध बुध्यस्व ३३ ताः कन्या निर्दिशति सिनीवालीति शशिनी दृष्टे सिनीवाली स्यात् नष्टे कुहू रमावास्या अनुमतिरू नेराका ॥६॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

संपूर्णेपूर्णमासीच ३४।३५ पुलस्त्यश्चहविर्भुविपत्न्यामित्यन्वयः सोऽगस्त्यः दह्राग्निर्जाठराग्निः विश्रवाश्चपुल
स्त्यस्यसुतइतिशेषः ३६ तस्यविश्रवसः इडविडायाञ्जातःसुतः कुबेरः अन्यस्यांभार्यायांकेशिन्यांरावणादयस्तु

सिनीवालीकुहूराकाचतुर्थ्यनुमतिस्तथा ३४ तत्सुत्रावपरावास्तांख्यातौस्वारोचिषेऽं
तरे उतथ्योभगवान्साक्षाद्वह्निष्ठश्चबृहस्पतिः ३५ पुलस्त्योऽजनयत्पत्न्यामगस्त्यं
चहविर्भुवि सोऽन्यजन्मनिदह्राग्निर्विश्रवाश्चमहातपाः ३६ तस्ययक्षपतिर्देवःकु
बेरस्त्विडविडासुतः रावणःकुंभकर्णश्चतथाऽन्यस्यांबिभीषणः ३७ पुलहस्यगति
र्भार्यात्रीन्सूतसतीसुतान् कर्मश्रेष्ठंवरीयांसंसहिष्णुंचमहामते ३८ क्रतोरपिक्रि
याभार्यावालखिल्यानसूयत ऋषीन्षष्टिसहस्राणिज्वलतोब्रह्मतेजसा ३९ ऊ
र्जायांजज्ञिरेपुत्रावसिष्ठस्यपरंतप चित्रकेतुप्रधानास्तेसप्तब्रह्मर्षयोमलाः ४० चि
त्रकेतुःसुरोचिश्चविरजामित्रएवच उल्बणोवसुभृद्यानोद्युमान्शक्त्यादयोऽपरे।
४१ चित्तिस्त्वथर्वणःपत्नीलेभेपुत्रंधृतव्रतम् दध्यंचमश्वशिरसंभृगोर्वंशंनिबोधमे
। ४२।

यःसुताः ३७।३८ ज्वलतः प्रकाशमानान् ३९ चित्रकेतुप्रमुखाःजज्ञिरेतेचसप्तर्षयोजाताः ४० तानेवाह
चित्रकेतुरितिवसुभृद्यानोनामैकः शक्त्यादयोऽपरेअन्यस्याःपुत्राः४१ । ४२ ॥ ४२ ॥ श्री

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ख्यातांपत्न्याम्पुत्रान्पुत्रौपुत्रींचतानेवाह धातारमिति ४३ तयोःधातृविधात्रोः ४४ कविश्चभार्गवः भृगोःपुत्रः

भृगुःख्यात्यांमहाभागःपत्न्यांपुत्रानजीजनत् धातारंचविधातारंश्रियंचभगवत्पराम् ४३ आयतिंनियतिंचैवसुतेमेरुस्तयोरदात् ताभ्यांतयोरभवतांमृकंडः प्राणएवच ४४ मार्कण्डेयोमृगंडस्यप्राणाद्वेदशिरोमुनिः कविश्चभार्गवोयस्यभगवानुशनासुतः ४५ सर्वेतेमुनयःक्षत्तर्लोकान्सर्गैरभावयन् एषकर्दमदौहित्रसंतानःकथितस्तव शृण्वतःश्रद्दधानस्यसद्यःपापहरःपरः ४६ प्रसूतिंमानवींदक्षउपयेमेत्यजात्मजः तस्यांससर्जदुहितॄःषोडशाऽमललोचनाः ४७ त्रयोदशाऽदाद्धर्मायतथैकामग्नयेविभुः पितृभ्यएकांयुक्तेभ्योभवायैकांभवच्छिदे ४८ श्रद्धामैत्रीदयाशांतिस्तुष्टिःपुष्टिःक्रियोन्नतिः बुद्धिर्मेधातितिक्षाह्रीर्मूर्तिर्धर्मस्यपत्नयः ४९ श्रद्धाऽसूतशुभंमैत्रीप्रसादमभयंदया शांतिःसुखंमुदंतुष्टिःस्मयंपुष्टिरसूयत ५० योगंक्रियोन्नतिर्दर्पमर्थंबुद्धिरसूयत मेधास्मृतिंतितिक्षातुक्षेमंह्रीःप्रश्रयंसुतम् ५१॥

स्यकवेःसुतःउशनाः ४५।४६ आत्मजःब्रह्मपुत्रः नतुप्राचेतसः ४७ युक्तेभ्यःसंयतेभ्यः मिलितेभ्योवा ४८।४९।



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सर्वेषांगुणानामुत्पत्तिर्यस्यांसा ५२। ५३ उपतस्थुः भेजुः ५४ निजयामायया यस्मिन्नात्मनि खे गगने रूपभेदं गंधर्वन-
गरमिवेदं विश्वं विरचितं तस्यात्मनः प्रतिचक्षणाय प्रकाशनाय आत्मानं योऽद्य प्रादुश्चकार प्रकटितवान् तस्मै पुरु-
षाय नमः केन रूपेण प्रादुश्चकार ऋषेर्मूर्त्तिर्निराकारो यस्मिन् ते नैतेन रूपेण ५५ सोऽयं नोऽस्मान् सुरगणान् अनल्प-

मूर्त्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी ययोर्जन्मन्यदो विश्वमभ्यनंदत्सुनिर्वृतम् ५२॥
मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः दिव्यः वाद्यंत तूर्याणि पेतुः कुसुमवृष्टयः ५३॥
मुनयस्तुष्टुवुस्तुष्टा जगुर्गंधर्वकिन्नराः नृत्यंति स्म स्त्रियो देव्य आसीत्परममंगलम्॥
देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः ५४ यो मायया विरचितं निजयात्मनीदं खे रूप-
भेदमिव तत्प्रतिचक्षणाय एतेन धर्मसदने ऋषिमूर्त्तिनाऽद्य प्रादुश्चकार पुरुषाय
नमः परस्मै ५५ सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान्सत्त्वेन नः सुरगणाननुमेय-
तत्त्वः दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपतारविंदम् ५६ एवं
सुरगणैस्तात भगवंतावभिष्टुतौ लब्ध्वावलोकैर्ययतुरर्चितौ गंधमादनम् ५७॥ करुणा-

युक्तेन विलोकनेन विशिष्टनेत्रेण दृश्यात् पश्यतु कथंभूतेन यच्छ्रीनिकेतममलमरविंदं तत्क्षिपता तिरस्कुर्वता
कथंभूतः अनुमेयं शास्त्रतो विचार्यं न त्वस्माकमपरोक्षं तत्त्वं यस्य कथंभूतानस्मान् स्थितेर्जगन्मर्यादाया व्यतिकरोऽन्य-

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भुवोभारस्यव्ययापनाशायचकारएकवाक्यत्वार्थः तदुक्तंतन्त्रे अर्ज्जुनेतुनरावेशः कृष्णोनारायणःस्वयमिति यदूद्वहः।
श्रीकृष्णः कुरूद्वहोऽर्ज्जुनः उभावपिकृष्णनामानौ ५८ अग्न्यभिमानिनोदेवान् स्वाहानामतस्यभार्याहुतभोजनमिति
त्रयाणांविशेषणं ५९ :पितरस्त्रयः पितामहएकः तैःसाकंसह ६० वैतानिके वैदिके कर्मणि यज्ञेयेषांनाम

ताविमौवैभगवतोहरेरंशाविहागतौ भारव्ययायचभुवःकृष्णौयदुकुरूद्वहौ ५८॥
स्वाहाऽभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् पावकंपवमानंचशुचिंचहुतभोजनम् ५९ तेभ्योऽग्नयःसमभवन्चत्वारिंशच्चपंचच तएवैकोनपंचाशत्साकंपितृपितामहैः ६० वैतानिकेकर्मणियन्नामभिर्ब्रह्मवादिभिः आग्नेय्यादृष्टयोयज्ञेनिरूप्यंतेऽग्नयस्तुते ६१ अग्निष्वात्ताबर्हिषदःसौम्याःपितरआज्यपाः साग्नयोऽनग्नयस्तेषांपत्नीदाक्षायणीस्वधा ६२ तेभ्योदधारकन्येद्वेवयुनांधारिणींस्वधा उभेतेब्रह्मवादिन्योज्ञानविज्ञानपारगे ६३ भवस्यपत्नीतुसतीभवंदेवमनुव्रता आत्मनःसदृशंपुत्रंनलेभेगुणशीलतः ६४॥

[६१]भिरग्निदेवताकादृष्टयोनिरूप्यंतेक्रियंते तएतेऽग्नयोनलौकिकाः अतोबहूनांनवैयर्थ्यमितिभावः ६१ सौम्याः सोमपाःयेषामग्नौकरणमस्तितेसाग्नयः तद्रहितास्त्वनग्नयः ६२ तयोस्तुसंततिर्नाभवत्जीवन्मुक्तत्वादित्याह उभेतेइति ६३ गुणशीलतः आत्मनःसदृशम् देवमनुव्रताऽपि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तत्रहेतुःस्वेपितरिदक्षे अप्रतिरूपेअसदृशेप्रतिकूलेसतीत्यर्थः आत्मनास्वयमेवात्मानंदेहमजहात् त्यक्तवती योगसंयुतायोगमाश्रित्येति ६५ ॥ इतीश्रीभागवतेचतुर्थस्कंधेटीकायांप्रथमोऽध्यायः १ ॥ द्वितीयेप्रथमाध्यायोपक्षिप्तभवदक्षयोः विद्वेषेवर्ण्यतेहेतुर्विश्वसृग्यज्ञसंभवः १ सतीसतीनाम्नी१नचासौकस्यचित्द्वेषार्हइत्याह

पितर्य्यऽप्रतिरूपेस्वेभवायानागसेरुषा अप्रौढैवात्मनात्मानमजहाद्योगसंयुता ६५ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धेविदुरमैत्रेयसंवादेप्रथमोऽध्यायः १ विदुरउवाच भवेशीलवतांश्रेष्ठेदक्षोदुहितृवत्सलः विद्वेषमकरोत्कस्मादनादृत्यात्मजांसतीम् १ कस्तंचराचरगुरुंनिर्वैरंशांतविग्रहम् आत्मारामंकथंद्वेष्टिजगतोदैवतंमहत् २ एतदाख्याहिमेब्रह्मन्जामातुःश्वशुरस्यच विद्वेषस्तुयतःप्राणांस्तत्यजेदुस्त्यजान्सती ३ मैत्रेयउवाच पुराविश्वसृजांसत्रेसमेताःपरमर्षयः तथा मरगणाःसर्वेसानुगामुनयोऽग्नयः ४ ॥

१ कइतिचराचरगुरुंजगतांदैवतंचतंकोद्वेष्टिकथंचनिर्वैरंद्वेष्टिनिर्वैरत्वेहेतुःभावेक्तःशांतंशांतिरेवविग्रहोयस्यकुतःआत्मन्येवारामेरतिर्यस्यतम् यद्वाकःप्रजापतिर्दक्षःकथंद्वेष्टिएवंभूतेतस्मिन्द्वेषोऽयुक्तोऽशक्यश्चेत्यर्थः २ यतोहेतोर्विद्वेषः यतोविद्वेषात्प्राणांस्तत्याजएतदाख्याहि ३ तदेवाख्यातुमितिहासंप्रस्तौति पुरेतिसमेताआसन् ४ ॥ ः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्रविष्टंदक्षमितिशेषः महत्सदः महतीसभाम् ५ स्वधिष्ण्येभ्यःस्वीयासनेभ्यः ६।७ प्राक्स्वोपवेशनात्पूर्वमेव।
निषण्णमुपविष्टंमृडंशिवंतदनादृतः तेनाभ्युत्थानादिभिरकृतादरः नामृष्यत्नासहत वामंवक्रंयथाभवतित
थाऽभिवीक्ष्य ८ मेवचनंश्रूयतांअज्ञानात्नमत्सराच्चनब्रुवतः ९ स्तब्धेनउचितक्रियाशून्येनध्वस्तेनेतिपाठेभ्रष्टेन

तत्रप्रविष्टमृषयोदृष्ट्वार्कमिवरोचिषा भ्राजमानंवितिमिरंकुर्वंतंतन्महत्सदः ५॥
उपतिष्ठन्सदस्यास्तेस्वधिष्ण्येभ्यःसहाग्नयः ऋतेविरिंच्यंशर्वंचतद्भासाक्षिप्त
चेतसः ६ सदसस्पतिभिर्दक्षोभगवान्साधुसत्कृतः अजंलोकगुरुंनत्वानिषसाद
तदाज्ञया ७ प्राङ्निषण्णंमृडंदृष्ट्वानामृष्यत्तदनादृतः उवाचवामंचक्षुर्भ्यामभिवीक्ष्यद
हन्निव ८ श्रूयतांब्रह्मर्षयोमेसहदेवाःसहाग्नयः साधूनांब्रुवतोवृत्तं नाज्ञानान्न
चमत्सरात् ९ अयंतुलोकपालानांयशोघ्नोनिरपत्रपः सद्भिराचरितःपंथायेनस्त
ब्धेनदूषितः १० एषमेशिष्यतांप्राप्तोयन्मेदुहितुरग्रहीत् पाणिंविप्राग्निमुखतःसा
वित्र्याइवसाधुवत् ११ गृहीत्वामृगशावाक्ष्याःपाणिंमर्कटलोचनः प्रत्युत्थानाभिवा
दार्हेवाचाप्यकृतनोचितम् १२ १० तदेवाह एषइतियदस्माद्विप्राग्निसमक्षंसावित्रीतुल्यायामेदु
हितुःपाणिमग्रहीत् ११ मृगशावस्यहरिणबालस्याक्षिणीवाक्षिणीयस्याः प्रत्युत्थानाभिवादार्हेमयिउचितंसन्मा

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अनर्हायकन्यांदत्तेत्यनुतप्यमानआह लुप्तक्रियायेतिसार्धैश्चतुर्भिः उशतींवेदलक्षणांगिरम् १३ प्रेतावासेषुश्मशानेषुव्युप्ताविकीर्णाःकेशाःयस्य १४ चिताभस्मनाकृतंस्नानंयेनप्रेतानांस्रजोमाल्यानियस्यसप्रेतस्रक्नृणामस्थीनिभूषणानियस्यशिवइत्यपदेशोनाममात्रंयस्यतमोमात्रात्मकःकेवलंतमोरूपआत्मास्वभावोयेषाम् १५ उन्मादाभूतविशेषास्तेषांनाथायदुर्हृदेदुष्टचित्तायवत्तेतिखेदे वास्तवस्त्वयमर्थः लुप्ताःक्रियाःयस्मिन्परब्रह्मस्वरूपत्वात् अतएवनास्तिशुचिर्यस्मात् अमानिनेअभिन्नसेतवेइतिचच्छेदः तस्यपरमेश्वरस्यमदीयामानुषीक

**लुप्तक्रियायाशुचये मानिने भिन्नसेतवे अनिच्छन्नप्यदांबालांशूद्रायेवोशतीं। गिरम् १३ प्रेतावासेषु घोरेषु प्रेतैर्भूतगणैर्वृतः अटत्युन्मत्तवन्नग्नोव्युप्तकेशोहसन्रुदन् १४ चिताभस्मकृतःस्नानःप्रेतस्रङ्नस्थिभूषणः शिवापदेशोह्यशिवोमत्तोमत्तजनप्रियः पतिःप्रमथभूतानांतमोमात्रात्मकात्मनाम् १५ तस्माउन्मादनाथायनष्टशौचायदुर्हृदे दत्तावतमयासाध्वीचोदितेपरमेष्ठिना १६॥**

एतत्कथंयोग्यास्यादितिलज्जा दित्सातुमनिच्छन्नपितत्संबंधलोभेनदत्तवान् शूद्रायेत्यनर्हत्वमात्रेदृष्टांतः नहीनत्वेपूर्वापरस्ववचनविरोधापत्तेः एतदुक्तंभवतियथाकश्चिच्छूद्रायवेदमर्थलोभेनददातिप्रेतावासेष्वित्यादिसर्वंविडंबनमात्रमितिस्वयमेवाहउन्मत्तवदितिअन्यथाउन्मत्तइत्येवावक्ष्यत् अशिवोनास्तिशिवोयस्मात् अमत्तोमत्तजनप्रियइतिचच्छेदः पतिःप्रमथभूतानामितिभक्तवात्सल्यमाह तामसानपिदोषमपनीयपानीतिनष्टानामपिशौचंशुद्धिर्यस्मात् दुष्टेष्वप्येनमयाऽनुकं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्वा

अप्रतीपं अप्रतिकूलं यथा भवत्येवमवस्थितमपि विनिंद्य १७ देवानां यजनसमये देवैः सह भागं न लभतां किंतु तेभ्यः पूर्वमेव लभतां अग्रभोजित्वं यद्वा तेषु भुक्तवत्सु लभतां सर्वपोषकत्वात् तत्र हेतुः देवगणोऽधमो यस्मात् सः देवगणाधी शद्वित्यर्थः १८ सदस्सस्तस्मात् स्थानाद्विनिष्क्रम्य जगाम हे कौरव्य १९ गिरिशस्यानुगानामग्रणीर्मुख्यः रोष एव कषाय

मैत्रेय उवाच विनिंद्यैवं स गिरिशमप्रतीपमवस्थितम् दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे १७ अयं तु देवयजन इंद्रोपेंद्रादिभिर्भवः सह भागं न लभतां देवैर्देवगणाधमः १८ निषिध्यमानः स सदस्यमुख्यैर्दक्षो गिरित्राय विसृज्य शापम् तस्माद्विनिष्क्रम्य विवृद्धमन्युर्जगाम कौरव्य निजं निकेतनम् १९ विज्ञाय शापं गिरिशानुगाग्रणीर्नंदीश्वरो रोषकषायदूषितः दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः २० य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् २१ गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया कर्मतंत्रं वितनुते वेदवादविपन्नधीः २२ बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः॥ १स्तेन दूषितः आरक्तनेत्र इत्यर्थः तस्य गिरिशस्यावाच्यतां वचनानर्हतां निंद्यतामित्यर्थः तेभ्योऽपि शापं विससर्ज २० दक्षं शप्तिसाधैस्त्रिभिरेतन्मर्त्यं दक्षशरीरमुद्दिश्य श्रेष्ठं मत्वा अप्रतिद्रुहि प्रतिद्रोहमकुर्वति पृथग्दृष्टिः भेददर्शी तत्त्वतः परमार्थात् २१ अज्ञत्वमेवाह गृहेष्विति कर्मतंत्रं कर्मपरिकरं वेदे ये अर्थ

वादा अस्य यंह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादयस्तैः [illegible] र्भाविनष्टा धीर्यस्य २२ परो देहादिः तमेवात्मत्वेनाभिमतो ध्यातुं [illegible]

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्तया बुद्ध्या विस्मृता आत्मनो गतिस्तत्त्वं येन अतः पशुतुल्यः अनितरां स्त्रीकामोऽस्त्विति द्वितीयः शापः बस्तस्य मुखमेवमु
खं यस्येति तृतीयः शापः २३ अयं च शापोऽस्यानुरूप एवेत्याह विद्याबुद्धिः इयमेव तत्त्वविद्येति बुद्धिर्यस्य अतो सो जड एव
द्विजान् शपति संसरंत्विति सार्द्धाभ्यां शर्वमवमन्यन इति तथा तमम् दक्षं ये चानुवर्त्तन्ते ते संसरंतु जन्ममरणाद्यनुभवंत्वि
त्येकः शापः श्रुताया वेदरूपायाः पुष्पिण्याः पुष्पाणीवार्थवादाः मनःक्षोभकत्वात् अर्थवादबहुलायाइत्यर्थः मधुगंधतुल्येन

स्त्रीकामः सोऽस्त्वनितरां दक्षो बस्तमुखोऽचिरात् २३ विद्याबुद्धिरविद्यायां कर्ममय्यामसौ
जडः संसरंत्विह ये चामुमनु शर्वावमानिनम् २४ गिरः श्रुतायाः पुष्पिण्या मधुगंधेन भू
रिणा मन्था चोन्मथितात्मानः संमुह्यंतु हरद्विषः २५ सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपो
व्रताः वित्तदेहेंद्रियारामा याचका विचरंत्विह २६ तस्यैवं वदतः शापं श्रुत्वा द्विजकुला
यवै भृगुः प्रत्यसृजच्छापं ब्रह्मदंडं दुरत्ययम् २७ भवव्रतधरा ये च ये च तान्समनुव्रताः
पाखंडिनस्ते भवंतु सच्छास्त्रपरिपंथिनः २८ नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः

प्ररोचनेन मथ्या मनःक्षोभकेण उन्मथित आत्मा मनो येषां ते संमुह्यंतु कर्मस्वासक्ता भवंत्विति द्वितीयः शापः २५ स
र्वभक्षाः भक्ष्याऽभक्ष्यविचारशून्याः वृत्त्यै देहादिपोषणाय धृतानि विद्यातपोव्रतानि यैः वित्तादिष्वेवारामो रतिर्येषां ते या
चकाः संतो विचरन्त्विति च शापचतुष्टयम् २६ प्रत्यसृजत् प्रत्युदात् शापरूपं ब्रह्मदंडम् २७ सच्छास्त्रस्य परिपंथिनः प्र

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

आसवस्तालादिसंभवंमद्यं द्वंद्वैकात् षंढत्वं तद्यत्रदैवंपूज्यंदेवतावदादरणीयमितिवा २९ ब्रह्मवेदंकथंभूतंसेतुंम र्यादारूपंतदेवाह पुंसांवर्णाश्रमाचारवतांविधारणंधारकम् ३० सेतुत्वंप्रपंचयतिद्वाभ्यांएषःवेदलक्षणएवशिवः पंथाःयंपूर्वेऋषयः अनुसंतस्थुःआस्थितवंतःयस्मिन्जनार्दनःप्रमाणंमूलम् ३१ भूतराट् भूतानांतामसानांपतिः

विशंतुशिवदीक्षायांयत्रदैवंसुरासवम् २९ ब्रह्मचब्राह्मणांश्चैवयद्यूयंपरिनिंदथ से। तुंविधारणंपुंसामतःपाखंडमाश्रिताः ३० एषएवहिलोकानांशिवःपंथाःसनातनः यं पूर्वेचानुचानुसंतस्थुर्यत्प्रमाणंजनार्दनः ३१ तद्ब्रह्मपरमंशुद्धंसतांवर्त्मसनातनम् वि गर्ह्ययातपाखंडंदैवंवोयत्रभूतराट् ३२ मैत्रेयउवाच तस्यैवंवदतःशापंभृगोःसभगवा न्भवः निश्चक्रामततःकिंचिद्विमनाइवसानुगः ३३ तेऽपिविश्वसृजःसत्रंसहस्रपरि वत्सरान् संविधायमहेष्वासयत्रेज्यऋषभोहरिः ३४ आप्लुत्यावभृथंयत्रगंगायमुनया न्विता। विरजेनात्मनासर्वेस्वंस्वंधामययुस्ततः ३५ ॥ इतिश्रीभागव० चतु० धेद्क्षशा। ऽपोनामद्वितीयोऽध्यायः २

३२ अन्योऽन्यशापेनोभयोर्नाशाद्विमनाइति तथाऽपिभगवदनुग्रहीतानांनाशो नस्यादितिहेतोर्बिमनाइवेतिभावः ३३ ऋषभःसर्वश्रेष्ठोहरिर्यत्रइज्यःपूज्यःतत्सत्रंसम्यग्विधायहेमहेष्वासविदुर ३४ यत्रप्रयागेअन्वितातत्रावभृथस्नानंकृत्वाततःस्यानाद्ययुः ३५ ॥ इतिश्रीभागवतेचतुर्थस्कन्धेद्वितीयोऽध्यायः २॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तृतीये तु सती तातयज्ञोत्सवदिदृक्षया गमिष्यंती महेशेन वारितानीतिहेतुभिः १ ध्रियमाणयोः अवनिष्ठमानयोः ध्रङ् अवस्थान इत्यस्मात् १ यद्यपि रुद्रविहीनो यज्ञो नास्त्येव तथापि दक्षस्य रुद्रपरित्यागो द्वेषाद्गर्वाच्च तत्र द्वेषे हेतुरुक्तः गर्वे हेतुमाह यदा तु प्रजापतीनामाधिपत्येऽभिषिक्तः तदा तस्य स्मयो गर्वोऽभवत् २ गर्वो दैवब्रह्मनिष्ठान् सेश्वरानभिभूय तिर

मैत्रेय उवाच सदा विद्वेषतोरेवं कालो वै ध्रियमाणयोः जामातुः श्वशुरस्यापि सुमहानति चक्रमे १ यदाऽभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत् २ इष्ट्वा स वाजपेयेन ब्रह्मिष्ठानभिभूय च बृहस्पतिसवं नाम समारेभे क्रतूत्तमम् ३ तस्मिन् ब्रह्मर्षयः सर्वे देवर्षिपितृदेवताः आसन् कृतस्वस्त्ययनास्तत्पत्न्यश्च सभर्तृकाः ४ तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम् सती दाक्षायणी देवी पितुर्यज्ञमहोत्सवम् ५ व्रजंतीः सर्वतो दिग्भ्य उपदेववरस्त्रियः विमानयानाः सप्रेष्ठा निष्ककंठीः सुवाससः ६ दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुंडलाः ॥ ३ कृत्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति श्रुतेः वाजपेयेनेष्ट्वा समारेभे ३ कृतस्वस्त्ययनाः कृतमंगलाः सभर्तृका इति दक्षिणादिभिः प्रथममर्हितानामपि पत्न्यर्हणे पुनरर्हणमुक्तम् ४ तत्तदा खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा ५ तत्र व्रजंतीः उपदेवानां गंधर्वादीनां वरस्त्रियश्च स्वस्य निलयस्याऽभ्याशे समीपे दृष्ट्वा औत्सुक्यात् सती भर्तारमभ्यभाषतेति त्रयाणामन्वयः कथंभूतास्त्रियो दृष्ट्वा वि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अक्षीणि यस्यां मृष्टानि उज्ज्वलानि यासां ताः ७ निर्यापितः प्रवर्त्तिताः हे वाम शिव ते यद्यर्थिता इच्छा तर्हि वयं च तत्राभिसराम गच्छामः न चायापि यागो निवृत्तः यतोऽमी विबुधा व्रजंति ८ औत्सुक्यं प्रकटयंत्याह तस्मिन्निति षड्भिः पितृभ्यामुपनीतं दत्तं परिबर्हं अलंकारादि द्रव्यं भवता सह अर्हितुं स्वीकर्त्तुं कामये अर्हितमिति पाठे सत्कृतं परिबर्हमिच्छामि

प्रतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत ७ सत्युवाच प्रजापतेस्ते श्वशुरस्य सांप्रतं निर्यापितो यज्ञमहोत्सवः किल वयं च तत्राभिसराम वाम ते यद्यर्थिताऽमी विबुधा व्रजंति ८ तस्मिन्भगिन्यो मम भर्तृभिः स्वकैर्ध्रुवं गमिष्यंति सुहृद्दिदृक्षवः अहं च तस्मिन्भवताऽभिकामये सहोपनीतं परिबर्हमर्हितुम् ९ तत्र स्वसॄर्मे ननु भर्तृसंमिता मातृष्वसॄः क्लिन्नधियं च मातरम् द्रक्ष्ये चिरोत्कंठमना महर्षिभिरुन्नीयमानं च मृडाध्वरध्वजम् १० त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम् तथाऽप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम् ११ ॥

९ तत्र स्वसॄर्भगिनीः भर्तृभिः संमिताः सदृशीः क्लिन्नधियं स्नेहार्द्रचित्तां चिरमुत्कंठमुत्सुकं मनो यस्याः साहं द्रक्ष्यामि हे मृड उन्नीयमानं प्रवर्त्यमानं अध्वरे ध्वजमिव दृश्यं श्रेष्ठमध्वरम् यद्वा उत्क्षिप्यमाणं यज्ञकेतुं यूपं वा १० अहो किं तत्राश्चर्यं येन तदौत्सुक्यमिति चेत् तत आह त्वयीति हे अज एतद्विश्वमाश्चर्यरूपं त्वय्येव त्वन्मायया रचितं विभाति अतो यद्यपि तव नाश्चर्यबुद्धिस्त

द्रिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति पश्येति द्वाभ्यां हे अभव इति सुहृद्वियोगदुःखं त्वया नास्वादितमिति भावः अन्यायोषितः संबंधरहिता अपि प्रयांती: पश्य कांतसखाः भर्तृसहिताः वरूथशः संघशः कथंभूताः यासां विमानैर्नभो मंडितं ताः हे शितिकंठ नीलकंठेति परानुग्रहाय त्वया विषमपि भक्षितमिति सूचयति १२ तदाह हे सुरश्रेष्ठ पितृगेहोत्सवं निशम्य सुताया देहः

पश्य प्रयांतीरभवान्ययोषितोऽप्यलंकृताः कांतसखा वरूथशः यासां व्रजद्भिः शितिकंठ मंडितं नभो विमानैः कलहंसपांडुभिः १२ कथं सुतायाः पितृगेहकौतुकं निशम्य देहः सुरवर्य नेंगते अनाहुता अप्यभियंति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम् १३ तन्मे प्रसीदेदममर्त्य वांछितं कर्तुं भवान्कारुणिको बताहति त्वयात्मनोऽर्द्धेऽहमदभ्रचक्षुषा निरूपिता मानुगृहाण याचितः १४ ऋषिरुवाच एवं गिरित्रः प्रिययाभिभाषितः प्रत्यभ्यधत्त प्रहसन्सुहृत्प्रियः संस्मारितो मर्मभिदः कुवागिषून्यानाह को विश्वसृजां समक्षतः १५ श्रीभगवानुवाच॥ ऽ कथं नेंगते द्रष्टुं न प्रचलति तथाप्यनाहूताः संतः कथं गच्छामस्तत्राह सौहृदं केतनं मित्रगृहं तथा भर्त्रादीनां च गृहं अनाहुता अप्यभियंति संतः इत्यमार्षम् १३ हे अमर्त्य तत्तस्मात्सा त्वं इदं मे वांछितं कर्तुं भवानर्हति कारुणिकत्वमेवाह अदभ्रचक्षुषा अनल्पज्ञानेनापि त्वया आत्मनो देहस्यार्द्धेऽहं निरूपिता धृता यतोऽर्द्धनारीश्वर इति ख्यातोऽसि अतो मा मामनुगृहाण याचितः सन् १४ अभिभाषितो भिया चितः कः दक्षः या नाह मर्मभिदं निमित्ततां कृत्वा निरूपितं दक्षवाक्यस्मारितः संस्मारितः १५

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अनाहूता अपीति त्वया पदुहितस्तु कंन च्छोभनमेवं किंतु अनात्म्यं देहादावहंकारः तत्कृतेनमदेनमन्युनावतेबंधवोय
द्यनुत्यादितदोषदृष्टयो भवंति नहिं नउत्सादिना आरोपिता दोषदृष्टिर्येषां ते १६ ननु विद्यादिगुणयुक्तोदक्षस्त्वादृशेषुमह
त्सु कथं दोषदृष्टिर्भवेत् तत्राह विद्यादिभिरेव स्मरनौहृतायां विवेकज्ञानेनष्टेसति भूयसां महत्तमानां धामतेजानपश्यं
तिहि ननु गुणैः कथं विवेकनाशस्तत्राह सतां गुणैः विवेकहेतुभिरपि असत्तमाना मितरैः दोषभूतैः अतएवतैर्भृतःध

त्वयोदितं शोभनमेव शोभने अनाहूता अप्यभियंनिबंधुषु नेयद्यनुत्यादिनदोषदृष्टयो
बलीयसाऽनात्म्यमदेन मन्युना १६ विद्यातपोवित्तवपुर्वयः कुलैः सतां गुणैः षड्भिर॰
सत्तमेतरैः स्मृतौहृतायां भृतमानदुर्दृशः स्तब्धा न पश्यंति हि धाम भूयसाम् १७ नैतादृ॰
शानां स्वजनव्यपेक्षया गृहान् प्रतीयादनवस्थितात्मनां येभ्यागतान् वक्रधियाऽभिचक्ष॰
ते आरोपितभ्रूभिरमर्षणाक्षिभिः १८ तथाऽरिभिर्न व्यथते शिलीमुखैः शेतेऽर्दितांगो॰
हृदयेन दूयता स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवाऽनिशं तप्यति मर्मताडितः १९॥

तः पुरुषोवा अहं विद्वान् तापसइत्यादिना मानोगर्वस्तेनदुष्टा दृष्टिर्येषां ते १७ स्वजनव्यपेक्षया बंधुदृष्ट्या गृहान्न प्रती
यात् नावलोकयेत् अनवस्थितचित्तत्वमेवाह येवक्रधियाकुटिलया बुद्ध्या पश्यंति आरोपिताउत्तंभिताभ्रूर्येषु
तान्यारोपितभ्रूणि तैः आरोपिताभिर्भ्रूभिरितिवा अमर्षणैः सक्रोधैरक्षिभिः १८ ननु स्वजनानां गृहं रूत्दुर्गतत्वंते
षां दुश्चेष्टितं च सोढव्यं न तु स्वदः सहत्वादित्याह तथेति अरिभिः शिलीमुखैर्बाणैरर्दितांगः खंडितगात्रोपि तथा नव्यथ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मयि तत्र गतायां नेयं शंकेति चेत् तत्राह व्यक्तमिति निश्चितम् उत्कृष्टा गतिः स्थितिर्यस्य तस्यात्मजानां कन्यानां मध्ये त्वं प्रि-
येति मे संमतासि पितुः सकाशान् मानं न लप्स्यसे मदाश्रयात् मत्संबंधात् २० ननु भगवन् त्वया किमिति दक्षः ति-
रस्कृतः यतोसौ त्वां द्वेष्टि अत आह पापच्यमानेन अलं दह्यमानेन हृदा मनसा दुःखितेंद्रियः काभिः पुरुषो जी-
वस्तस्य बुद्धिश्चित्तं तत्साक्षिणां निरहंकाराणामित्यर्थः समृद्धिभिः पुण्ययत्कीर्त्यादिभिः एषां पदं स्थानमैश्वर्यं प्रा-

**व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियात्मजानामसि सुभ्रु संमता अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः २० पापच्यमानेन हृदातुरेंद्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम् अकल्प एषामधिरोढुमंजसा परं पदं द्वेष्टि यथाऽसुरा हरिम् २१ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने २२ सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः॥**

अकल्पः अशक्तः सन् परं द्वेष्टि असुरा यथा हरिं केवलं द्विषंति २१ ननु त्वया
प्रत्युत्थानविनयाद्यकरणादवज्ञात एवासौ तत्राह हे सुमध्यमे प्रत्युद्गमादिकं मिथो जनैर्यद्विधीयते तत्प्राज्ञैः सा-
साधु विधीयते साधुत्वमेवाह परस्मै श्रीवासुदेवाय गुहाशयाय अंतर्यामिण एव तच्च चेतसैव परिपूर्णे तस्मिन्का-
यिकव्यापारायोगात् अतोंऽतर्यामिदृष्ट्या मनसा सर्वं कृतमिति भावः २२ किंच न केवलमभ्यागतेष्वेव वासुदेवदृष्ट्या
नमनं क्रियते किंतु नित्यमेव मनसि वासुदेवश्चिंत्यत इत्याह विशुद्धं सत्त्वमंतः॥ ६ ॥ २ ॥ ६ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

करणंसत्वगुणोवावसुदेवशब्दितंवसुदेवशब्देनोक्तंकुतः यद्यस्मात्तत्रतस्मिन्सत्वेपुमान्वासुदेवईयतेप्रका
शतेअपगतमावृतमावरणंयस्मात्सः अयमर्थः वसुदेवेभवतिप्रतीयतइतिहिवासुदेवईयतेप्रका
विशुद्धेसत्वेप्रतीयते अतःप्रत्ययार्थेनप्रसिद्धेनप्रकृत्यर्थोनिर्धार्यते ततश्चवासयतिदेवमितिव्युत्पत्त्यावावसत्य
स्मिन्नितिवावासुः देवःदीव्यतेद्योततइतिवावसुभिःपुण्यैर्दीव्यतिप्रकाशतइतिवासुदेवशब्दवाच्यंशुद्धसत्वं
ततः किमतआह सत्वेचतस्मिन्नमयानमसानमस्कारेणानुविधीयतेसेव्यतइत्यर्थः मनसेतिपाठमनसाविशेषे

सत्वेचतस्मिन्भगवान्वासुदेवोत्यधोक्षजोमेनमसाविधीयते २३ तत्तेनिरीक्ष्योनपि
ताऽपिदेहरुदृक्षोममद्विट्तदनुव्रताश्चये योविश्वसृग्यज्ञगतंवरोरुमामनागसं
दुर्वचसाऽकरोत्तिरः २४ यदिव्रजिष्यस्यतिहायमद्वचोभद्रंभवत्यानततोभविष्य
ति संभावितस्यस्वजनात्पराभवोयदासस्सद्योमरणायकल्पते २५ ॥इतिश्रीभा०
चतु०उमारुद्रसंवादेतृती०३॥ मैत्रेयउवाच एतावदुक्त्वाविररामशंकरःपत्न्यंगना
शंकुभयन्नचिंतयन्॥

९णधीयतेधार्य्यतेचिंत्यतइत्यर्थः यतः अधोभूतेषुप्रत्याहृतेष्वक्षेषुजायतेप्र
काशतेइंद्रियागोचरइत्यर्थः २३ तत्तस्मात्त्वयाननिरीक्ष्यः देहकृत् पीतियोषकत्वादिभिरौपचारिकपितृत्वव्याव
त्यर्थद्विट्शत्रुः तदेवाह हेवरोरु योदक्षः विश्वसृजांयज्ञगतं मानिरपराधंतिरोऽकरोत् तिरस्कृतवान् २४ विपक्षेदो
षमाह यदीतिमद्वचोऽतिहायअतिक्रम्ययतःसंभावितस्यसुप्रतिष्ठितस्ययदापराभवोभवतितदासपराभवःमरणा

चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते १ उभयत्र अनुज्ञाने बलान्निवार-
णे च रुद्रहृद्दृक्षुः निष्क्रामती भवाःसरिशंकिना पुनर्निविशती च तदा सा सती द्विधा आस बभूव न गता न स्थिता आं-
दोलावत् गतिरभवत् १ सुहृद्दिदृक्षायाः प्रतिघातेन दुर्मनाः अश्रूणां कलाभिः लेशैरिति विह्वला व्याकुला अप्र-
तिपौरुषं स्वसमानपुरुषांतररहितं प्रधक्ष्यतीव भस्मीकरिष्यतीव रुषा जातो वेपथुः कंपो यस्याः २ ततस्तं विहाय पि-

सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदंत्यश्रुकलाऽतिविह्वला भवं भवान्यप्रतिपू-
रुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः २ ततो विनिःश्वस्य सती विहाय तं शोकेन रोषे-
ण च दूयता हृदा पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णात्मनो योऽर्द्धमदात्सतां प्रियः ।
३ तामन्वगच्छन्द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः सपार्षदयक्षा म-
णिमन्मदादयः पुरो वृषेंद्रास्तरसा गतव्यथाः ४ तां सारिकाकंदुकदर्पणांबुजश्वेता-
तपत्रव्यजनस्रगादिभिः ॥

पित्रोर्गृहानगात् कथंभूतं यः प्रीत्या तस्मै आत्मनो देहस्यार्द्धमदात् त्यागे हे-
तुः स्त्रैणं स्त्रीस्वभावः तेन विमूढा धीर्यस्याः सा ३ द्रुतविक्रमां शीघ्रं गच्छंतीं सह पार्षदैः यक्षैश्च वर्त्तमानाः मणिमान्-
मदश्च आदिर्येषां ते पुरः पुरतो वृषेंद्रो येषां ते गतव्यथा निर्भयाः रुद्रातिक्रमेण तस्या गमनाद्वा गतव्यथा इति वा ४ तां-
वृषेंद्रमारोप्य सारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्च महाराजविभूतिभिः सह विटंकिताः शोभिताः ययुः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सारिकापटेन निरूपिता पक्षिणी गीतायनैर्गीताश्रयैः ५ आसमंताद्यो वेदघोषस्तेनोर्जितं सोभमानं यज्ञसंबंधिप
शुविशसनं यस्मिन् यद्वा तेनोर्जितं अतिशयितं यज्ञवैशसं परस्परं स्पर्द्धा यस्मिन् तद्यजनं यज्ञस्थानं समाविशद्दे
वी विबुधैश्च जुष्टं मृद्दार्वादिभिर्निसृष्टानि निर्मितानि भांडानि पात्राणि यस्मिन् ६ कश्चन नाद्रियत् नादृतवान् यज्ञकृतो द

गीतायनैर्दुंदुभिशंखवेणुभिर्वृषेन्द्रमारोप्य विटंकिता ययुः ५ आब्रह्मघोषोर्जितयज्ञवै
शसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः मृद्दार्वयः कांचनदर्भचर्मभिर्निसृष्टभांडं यजनं समा
विशत् ६ तामागतां तत्र न कश्चनाद्रियत् विमानितां यज्ञकृतो भयाज्जनः ऋते स्वसॄर्वै
जननीं च सादराः प्रेमाश्रुकंठ्यः परिषस्वजुर्मुदा ७ सौदर्यसंप्रश्नसमर्थवार्त्तया मात्रा
च मातृष्वसृभिश्च सादरम् दत्तां सपर्यां वरमासनं च सा नादत्त पित्राऽप्रतिनंदिता सती ॥
८ अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ अनादृता यज्ञसदस्यधी
श्वरी चुकोप लोकानिव धक्ष्यती रुषा ९ ॥

क्षस्मात् यद्रूपं तस्मात् तत्र हेतुः तेन विमानितां स्वसॄः जननीं
च ऋते विना तास्तु सादराः परिषस्वजुः आलिंगितवत्यः प्रेमाश्रुभिर्निरुद्धः कंठो यासां ७ अप्रतिनंदिता अनादृता
सती नादत्त न गृहीतवती कथं सौदर्येण सोदरत्वेन भगिनीनां यः संप्रश्नः तत्र समर्था योग्या या वार्त्ता तया सह तां च नादृ
तनाशृणोदित्यर्थः ८ न विद्यते रुद्रस्य भागो यस्मिंस्तं देवे रुद्रे कृतं हेलनं अवज्ञामाह्वानाद्यकरणात् ९ ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

जगर्हे निंदितवती अमर्षेण कोपेन विपन्ना अव्यक्ता तया शिवं द्वेष्टीति शिवद्विट् तं धूमपथः कर्ममार्गस्तत्र श्रमो ऽभ्या-
सस्तेन स्मयो गर्वो यस्य दक्षस्य वधाय समुत्थितान् स्वाज्ञया निगृह्य निवार्य १० निंदामेवाह नयस्येति त्रयोदशभिः मुक्तवैर-
के त्यक्तविरोधे तस्मिन् शिवे भवतं ऋते विना कतमः प्रतीपयेत् प्रतिकूलमाचरेत् वैरभावे हेतवः यस्य लोके अतिशाय-
नः अतिशायितो नास्ति तथा प्रियश्चाप्रियश्च नास्ति समासपाठे अतिशयेन प्रियो नास्ति देहभृतां प्रियो ऽयमात्मा तस्य सम-
स्तस्यात्मनि कारणभूते समस्तरूप इति वा ११ तस्य च प्रतिकूलकरणं द्वेधा महत्तमद्रोहेण साक्षात्तद्रोहेण च तत्र पुरुषाणां

**जगर्ह साऽमर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् स्वतेजसा भूतगणान्समु-**
**त्थितान् निगृह्य देवी जगतोऽभिशृण्वतः १० श्रीदेव्युवाच नयस्य लोकेस्त्यतिशायनः प्रि-**
**यस्तथाऽप्रियो देहभृतां प्रियात्मनः तस्मिन्समस्तात्मनि मुक्तवैरके ऋते भवंतं कतमः प्र-**
**तीपयेत् ११ दोषान्परेषां हि गुणेषु साधवो गृह्णन्ति केचिन्न भवादृशा द्विज गुणांश्च फल्गू-**
**न्बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् १२॥**

चातुर्विध्यं वदंती महत्तमद्रोहमाह दोषा-
निति द्वाभ्याम् हे द्विजेत्यधिक्षेपः भवादृशाः त्वद्विधाः असूयकाः परेषां गुणेषु दोषानेव गृह्णन्ति न तु गुणान् केचिन्मध्य-
स्था गुणेषु दोषान्न गृह्णन्ति किंतु यथास्थितान् गुणदोषान्विवेकेन गृह्णन्ति ते तु महान्त उच्यंते साधवस्तु केवलं गुणानेव गृ-
ह्णन्ति न दोषान् ते तु महत्तरा उच्यंते महत्तमास्तु दोषान्न गृह्णन्त्येव ते च प्रत्युत फल्गून् तुच्छानपि गुणान्बहुलीकुर्वंति बहु-
लीकरिष्णवो भवंति तेषु भवान् अघम् अविदत् विदितवान् कल्पितवानित्यर्थः न च ब्रह्मिष्ठानभिभूय कल्पितवानित्यने

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एतच्चदुर्जनेषुयुक्तमेवेत्याह नेति कुणपंजडशरीरंतदेवात्मेतिवदंतियेतेषुईर्ष्याअसांतिःसेर्ष्यंयथाभवत्येवंमहतां
विनिंदेभियत् एतदाश्चर्यंनभवतिसेर्ष्यानिरस्ततेजःप्रभावो येषामितिवा यद्यपिमहापुरुषाः स्वनिंदांसहंतेतथाऽपि
तत्पादरेणवस्तदसहमानाः तेषांतेजोनिरस्यंतिअतोऽशक्तेषुमहन्निंदनमेवोचितमित्यर्थः १३ तदेवंमहत्तमद्रोहमु
क्त्वातस्मिन्नेवंकृतंद्रोहमाह यदितिद्वाभ्यां यत्यस्यद्व्यक्षरमात्रंशिवइतितत्प्रसिद्धंनामनृणांसर्वेषामाश्वऽघंसर्वंहंति
केवलंगिरेवेरितंउच्चारितंनतुमनःपूर्वकंतत्तुसकृदपिप्रसंगादपि तंशिवंद्वेष्टि नलंघ्यंशासनमाज्ञायस्यअहो शिवेत

नाश्चर्यमेतच्चरसत्कसर्वदामहद्विनिंदाकुणपात्मवादिषु सेर्ष्यमहापूरुषपादपांसुभि-
र्निरस्ततेजस्कृतदेवशोभनम् १३ यद्यक्षरंनामगिरेरितंनृणांसकृत्प्रसंगादघमाशुहं-
तितत् पवित्रकीर्त्तिंतमलंघ्यशासनंभवानहोद्वेष्टिशिवंशिवेतरः १४ यत्पादपद्मंमह-
तांमनोऽलिभिर्निषेवितंब्रह्मरसासवार्थिभिः लोकस्ययद्वर्षतिचाशिषोऽर्थिनस्तस्मैभ-
वान्कुप्यतिविश्वबंधवे १५ किंवाशिवाख्यमशिवंनविदुस्त्वदन्येब्रह्मादयस्तमवकीर्य-

रः अमंगलरूपः १४ पापहरत्वमुक्त्वाभुक्तिमुक्तिप्रदत्वेनशिवंवर्णयंत्याह यस्यपादपद्मं ॐजटाः श्मशाने॥
मनांसेवालयस्तैः ब्रह्मरसोब्रह्मानंदः सएवासवोमकरंदः तदर्थिभिः यच्चार्थिनःसकामस्यलोकस्यताआशिषोवर्ष-
ति १५ यदुक्तंशिवापरेशोत्यशिवइतियच्चोक्तंप्रेतावासेष्वित्यादितदाक्षिपंत्याह किंवेति योजटाअवकीर्यश्मशानेअव-
सन् वसतिस्मतस्यश्मशानस्यमाल्यानिभस्मानिनृकपालानिचभूषणत्वेनसंतियस्यतंत्वत्तोऽन्येनविदुःकिंतेविदंत्ये

७

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तच्चरणादवसृष्टंगलितंनिर्माल्यंयेमूर्द्धभिर्धारयंति १६ इदानींदेहंत्यक्तुकामाधर्मतत्त्वमाह कर्णावाच्छाद्यनिर्गच्छे
त्ययद्यदिमर्त्तुंमारयितुंवाकल्पोनभवति कदाधर्माविततरिधर्मरक्षकेईशेस्वामिनिअसृणिभिर्निरंकुशैर्नृभिरस्य
मानेअधिक्षिप्यमाणेप्रभुःशक्तश्चेत्रुशतीअकल्याणवादिनींप्रसह्यबलात्छिंद्यात्ततोऽपिस्वयंप्राणान्विसृजेदि
तियत्सधर्मः १७ तवत्वत्तःउसन्नंशितिकंठोनीलकंठःतन्निंदकात्प्रमादापन्नस्यापवित्रस्यत्यागंविनानशुद्धिरिति

तन्माल्यभस्मनृकपाल्यऽवसत्पिशाचैर्येमूर्द्धभिर्दधतितच्चरणावसृष्टम् १६ कर्णौपि
धायनिरयाद्यदकल्पईशेधर्माऽवितर्य्यऽसृणिभिर्नृभिरस्यमाने छिंद्यात्प्रसह्यरुशा॰
तीमसतींप्रभुश्चेज्जिह्वामसूनपिततोविसृजेत्सधर्मः १७ अतस्तवोत्पन्नमिदंकलेव
रंनधारयिष्येशितिकंठगर्हिणः जग्धस्य मोहाद्धिविशुद्धिमंधसोजुगुप्सितस्योद्धरणंप्र
चक्षते १८ नवेदवादाननुवर्त्ततेमतिःस्वएवलोकेरमतोमहामुनेःयथागतिर्देवमनु॰
ष्ययोःपृथक्स्वएवधर्मेनपरंक्षिपेत्स्थितः १९॥ दृष्टान्तेनाह जग्धस्यभक्षितस्यान्नस्योद्धरणंव
मनमेवपुंसःविशुद्धिंप्रचक्षते १८ यदुक्तंलुप्तक्रियायाशुचयइतितत्राहनेतिवेदवादान्विधिनिषेधरूपा
न्यान्स्वएवलोकेस्वात्मन्येवरममाणस्यमहतोमुनेःसम्यग्विरक्तस्यमतिर्नानुवर्त्ततेनिवृत्ताधिकारत्वात्अ॰
धिकारभेदेदृष्टांतःयथादेवानांगतिराकाशएवंमनुष्याणांपृथिव्यामेवअतःस्वेएवधर्मेएवप्रवृत्तिलक्षणेनिवृत्ति

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एतदेवोपपादयंस्त्वाह प्रवृत्तमग्निहोत्रादि निवृत्तं शमदमादिकं तं सत्यमेव यतः वेदे आश्रितं विहितं तच्च विविच्य व्यवस्थयाऽश्रितं न तु विशेषेण व्यवस्थामेवाह उभयं रागवैराग्यलक्षणं लिंगं चिह्नमधिकारि विशेषणं यस्मिंस्तत् ननु यावज्जीवमग्निहोत्रं जुहोति शान्तो दान्त इत्यादिषु नैवं व्यवस्था प्रतीयते सत्यं तथाप्युभयोरेकाधिकारविरोधात्तथा पर्यव स्यतीत्याह युगपद्भावो यौगपद्यं यौगपद्ये नैकस्मिन् कर्तरि तत्कर्मद्वयं विरोधि ननु तर्हि निवृत्तं कर्मशिवेनापि कर्तव्यमेव नेत्याह ब्रह्मणि सदाशिवे किंचिदपि कर्म न च्छेति न प्राप्नोति अतो यथा प्रवृत्तनिवृत्तयोः परस्परधर्माकरणे न दोषः तथे।

**कर्मप्रवृत्तं च निवृत्तमप्यृतं वेदे विविच्योभयलिङ्गमाश्रितम्। विरोधि तद्यौगपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्च्छति २० मा वः पदव्यः पितरस्मदास्थिता या यज्ञशाला। स्तनधूमवर्त्मभिः तदन्नतृप्तैरस्रुभृड्डिरीडिता अव्यक्तलिंगा अवधूतसेविताः २१ नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलंकुजन्मना॥**

एष्वपरे एतदुभयधर्माकरणेऽपीति भावः २० चिताभस्मकृतस्नानः तथा नग्नत्वादिना यो भोगाद्यभाव उक्तस्तत्राह हे पितः अस्माभिरास्थिताः आश्रिताः पदव्यः अणिमादिसमृद्धयः वो युष्माकं मा न संतीत्यर्थः यतो वः पदव्यो यज्ञशालास्वेव भवंति ताश्च तदन्नेन यज्ञगतेनान्नेन तृप्तैः केवलमीडिताः धूमवर्त्मभिश्च भुज्यंते या अस्मत्सरव्यस्तास्तु नैवं भूताः किंतु अव्यक्तलिंगा अव्यक्तं लिंगं हेतुर्यासां इच्छामात्रप्रभवत्वात् अवधूतैः ब्रह्मविद्भिः सेविताः अतोहमाढ्यो रुद्रो दरिद्र इति गर्वो मा कृथा इति भावः २१ किं बहुनोक्तेनेदं देहं स्यसाम्येवेत्याह द्वाभ्याम् एतेन नालं न पूर्यते किं अपितु अलमेव कथंभूतेन कुजन्मना नरदेवाह॥ २॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हरेः कृतापराधस्य तव देहादुद्भूतेन उत्पन्नेन ननु श्लाघ्योयं देहः कथं स्याज्यस्तत्राह कुजनस्य तव प्रसंगतः संबंधात् समलज्जा भूत् अनो यो महतामप्रियकर्त्ता तस्माद्यज्जन्म तद्धिक् त्वत्संबंधाद् श्लाघ्यमित्यर्थः २२ किंच परिहासादिषु विनोदेनापि दाक्षायणीति संबोधयन् त्वदीयं तत्संबंधवाचकं गोत्रं नाम यदा वृषध्वज आह गृह्णाति तदाऽहं व्यपेतनर्म-

व्रीडा मममाभूत्कुजनप्रसंगतस्तज्जन्म धिग्यो महतामवद्यकृत् २२ गोत्रं त्वदीयं भगवा
न्वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः व्यपेतनर्मस्मितमाशु तद्ध्यहं व्युत्स्रक्ष्य एतत्कु
णपं त्वदंगजम् २३ श्रीमैत्रेय उवाच इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षिताबुदीचीं निषसाद
शांतवाक् स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत् २४ कृत्वा स-
मानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः शनैर्हृदि स्थाप्य धियोरसि स्थितं
कंठाद्भ्रुवोर्मध्यमनिंदिताऽनयत् २५ एवं स्वदेहं महतां महीयसा मुहुः समारोपितमंकमा
दरात् जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् २६॥

स्मितं यथा भवत्येवं सुदुर्मना अतिदुःखितचित्ता भवामि तत्तस्माद्धि निश्चितं एतत्कुणपप्रायं व्युत्स्रक्ष्ये त्यक्ष्यामि २३ दक्षं प्रत्यनुवादं कृत्वा शत्रुहन् क्रोधादिरिपुघातिनु उदीचीं उदीच्यां दिशि पाठान्तरे उदङ्मुखी शांतवाक् गृहीतमौना जलं स्पृष्ट्वा आचम्य, दृग्दृशम् २४ योगमार्गमेवाह कृत्वेति अनिलौ प्राणापानौ ऊर्ध्वाधोवृत्तिकरौ निरोधेन समानौ एकरूपौ नाभिचक्रे कृत्वा तत उदानमुत्थाप्य धिया सह हृदि स्थापयित्वा कंठमार्गेण भ्रुवोर्मध्यमनयत् २५ महतां पूज्यतमेन श्रीरुद्रेण २६॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

चरणांबुजेआसवंभजनानंदंभर्तुरपरंनददर्शदेहश्चसद्यःप्रज्वलितोऽभूत्समाधिनायोऽग्निस्तेन २७ खेभुविचहा हेत्यादिवादःतमेवाह हंतेतिविषादे दैवतमस्यपूज्यतमस्यप्रियाकेनदक्षेणप्रकोपितासती २८ महदनात्म्यंदौर्जन्यंअस्य

ततःस्वभर्तुश्चरणांबुजासवंजगद्गुरोश्चिंतयतीनचापरम् ददर्शदेहोहतकल्मषासतीसद्यःप्रजज्वालसमाधिजाग्निना २७ तत्पश्यतांखेभुविचाद्भुतंमहद्धाहेतिवादःसुमहानजायत हंतप्रियादैवतमस्यदेवीजहावसून्केनसतीप्रकोपिता २८ अहोअनात्म्यंमहदस्यपश्यतप्रजापतेर्यस्यचराचरंप्रजाःजहावसून्यद्विमताऽऽत्मजासतीमनस्विनीमानमभीक्ष्णमर्हति २९ सोयंदुर्मर्षहृदयोब्रह्मध्रुक्चलोकेऽपकीर्तिंमहतीमवाप्स्यति यदङ्गजांस्वांपुरुषद्विडुद्यतांनप्रत्यषेधन्मृतयेऽपराधतः ३० वदत्येवंजनेसत्यादृष्ट्वाऽसुत्यागमद्भुतम् दक्षंतत्पार्षदाहन्तुमुदतिष्ठन्नुदायुधाः ३१ तेषामापततांवेगंनिशम्यभगवान्भृगुः यज्ञघ्नघ्नेनयजुषादक्षिणाग्नौजुहावह ३२॥

९ सर्वत्रस्नेहएवन्याय्यइत्याहुःयस्येतियेनविमताअवज्ञाता २९ दुर्मर्षंअसह्यंहृदयंयस्यलोकेजनमध्येचशब्दान्नरकंचयद्यतःस्वीयामंगजांसुतांअपराधतःस्वावज्ञयामृतयेमरणायोद्यतांननिवारितवान्पुरुषद्विट्शिवद्वेषी ३० अद्भुतंदृष्ट्वाच ३१ यज्ञघ्नान्हंतीतियज्ञघ्नघ्नस्तेनअपहतंरक्षइत्यादिना ३२॥ ३२ ॥ ३२ ॥ ९ ॥ ६ ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अध्वर्युणा भृगुणा येन तपसा सोमं प्राप्ताः ऋभवो नाम देवा उत्थिताः ३३ ब्रह्मतेजसा उशद्भिर्दीप्यमानैः ३४ ॥ इति श्रीभा० च० टी० चतुर्थोऽध्यायः ४ ॥ पंचमे तु सतीदेहत्यागमाकर्ण्य शंकरः वीरभद्ररुषोत्पाद्य तेन दक्षमघातयत् १ प्रजापतेर्हेतोर्निधनं कृतः तेनासत्कृतायाः तस्याध्वरे येऋभवो देवास्तैः १ स धूर्जटिः रुद्रः घोरः सन् जगत्सु कृतः सोऽष्टोष्ठ

अध्वर्युणाहूयमाने देवा उत्पेतुरोजसा ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ३३ तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ३४ ॥ इति श्रीभागव० चतुर्थस्कंधे सतीदेहोत्सर्गश्चतुर्थोऽध्यायः ४ श्रीमैत्रेय उवाच भवो भवान्या निधनं प्रजापतेरसत्कृताया अवगम्य नारदात् स्वपार्षदसैन्यं च तदध्वरर्भुभिर्विद्रावितं क्रोधमपारमादधे १ क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटिर्जटां तडिद्वह्निसटोग्ररोचिषम् उत्कृत्य रुद्रः सहसोत्थितो हसन् गंभीरनादो विससर्ज तां भुवि २ ततोऽतिकायस्तनुवा स्पृशन् दिवं सहस्रबाहुर्घनरुक् त्रिसूर्यदृक् करालदंष्ट्रो ज्वलदग्निमूर्द्धजः कपालमाली विविधोद्यतायुधः ३ ॥ ९ ततः सन् तां भुवि विससर्ज सुदष्टओष्ठपुटो येन तडितां वह्नीनां च सटाज्वालास्तद्वत् उग्रं रोचिर्यस्यास्ताम् २ ततो जटायाः सकाशात् अतिकायो वीरभद्रो जात इति शेषः तनुवा तन्वा देहेन दिवं स्पृशन् अत्युच्च इत्यर्थः घनरुक् कृष्णवर्णः त्रयः सूर्या इव दृशो यस्य करालास्तुंगा दंष्ट्रा यस्य ज्वलदग्निरिव मूर्द्धजा यस्य कपालमालायुक्तः विविधान्युद्यतान्यायुधानि यस्य ३ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हे रुद्र हे भट युद्धकुशल मदूटानां त्वमग्रणीः सन् सयज्ञं दक्षं जहि ब्रह्मतेजो दुर्जयमिति माऽमंस्थाः यतस्त्वं मे अंशकः ४ मन्युना रुद्रेण परिचक्रमे प्रदक्षिणीचकार असंगमप्रतिघातं यत् रंहो वेगः तेन भो तात महीयसां बलीयसामपि सहः सहिष्णु बलं सोढुं क्षमं मेने ५ जगदन्तको मृत्युः तस्याप्यन्तकं शूलं घोषयंति शब्दं कुर्वंतीति घोषणानि नूपुरादीनि भूषणा

तं किं करोमीति गृणंतमाह बद्धांजलिं भगवान् भूतनाथः दक्षं सयज्ञं जहि मद्भटानां त्वमग्रणी रुद्रभटांशको मे ४ आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे विभुम्॥ मेने तदात्मानमसंगरंहसा महीयसां तात सहःसहिष्णुम् ५ अन्वीयमानः स तु रुद्रपार्षदैर्भृशं नदद्भिर्व्यनदत्सुभैरवम् उद्यम्य शूलं जगदंतकांतकं संप्राद्रवत् घोषणभूषणांघ्रिः ६ अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम् तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः ७ वाता न वांति न हि संति दस्यवः प्राचीनबर्हिर्जीवति होग्रदंडः गावो न काल्यंत इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते ८॥ ६॥

नियोस्तावंघ्री यस्य सः ६ ककुभि दिशि तमो न भवति किंतु रज इति ज्ञात्वा कुतो रज एतत् कुतोऽभूत् दध्युः चिंतयामासुः ७ हे त्वंतराः संभवेनोत्याति के कल्पयंति वाता इति दस्यूनामभावे हेतुः प्राचीनबर्हिस्तदानीं तनो राजा जीवतीति न काल्यंते न शीघ्रं नीयंते ८॥

प्रसूतिर्दक्षपत्नी सामिश्रा मुख्या यासां विपाकः फलं पश्यंतीनामिति तस्याः दुःखाधिक्ये हेतुः अवदध्यौ अवज्ञातवान् अनागामनागसम् ९ नचेदं स्मृताऽवज्ञामात्रं किंतु रुद्रावज्ञानं च अतो नास्य भद्रं भविष्यतीत्याहुः यस्त्विति द्वाभ्याम् व्युप्तो विकीर्णो जटाकलापो यस्य स्वशूलस्य सूच्यामग्रे अर्पिताः प्रोताः दिग्गजेंद्रा यस्य उदितानि उन्नमितानि अस्त्राणि यैस्ते दोषो बाहवः एवध्वजास्तान्वितत्य हर्षेण नृत्यति उच्चः अट्टहासः कठोरो हासः एव स्तनयित्नुर्गर्जितं तेन भिन्ना

प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यैव तस्य यत्पश्यंतीनां दुहितॄणां प्रजेशः सुतां सतीमवदध्यावनागाम् ९ यस्त्वंतकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेंद्रः वितत्य नृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् १० अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ११ बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मुखे महात्मनः उत्सेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्य्यक् १२ ॥ ६ ॥

विदीर्णा दिशो येन सः १० अमर्षयित्वा असहनयुक्तं कृत्वा मन्युप्लुतं क्रोधव्याप्तम् उदस्तः विक्षिप्तो भागणो नक्षत्रसंघो येन पुनश्च तं कोपयतो विधातुरिति किं स्वस्ति स्यात्तस्यादेव काऽन्यस्य कथा ११ उद्विग्ना प्रचलिता दृक् यस्य तेन जनेन बहु यथा भवत्येवमुच्यमाने सति उत्पाततमाः महोत्पाताः उत्थिताः पर्यक् सर्वतश्च कथंभूताः महात्मनोऽपि दक्षस्य भ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

५ भा० च० टी० १७

नाना आयुधानि येषां वामनकैः ह्रस्वैरुद्यतायुधैः पिङ्गैः कपिलैः पिशंगैः पीतैः मकरस्येवोदरमाननं च येषां तैः परितो धावद्भिः अवरुद्धः १३ यज्ञशालायाः पूर्वपश्चिमस्तंभयोः अर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशः तं यज्ञशालायाः पश्चिमतः पत्नीशालां तां यज्ञशालाः पुरतः स्थितं सदो मंडपं सदसः पुरो हविर्द्धानं तस्योत्तरतश्चाग्नीध्रशालां तद्दि

तावत्स रुद्रानुचरैर्मखो महान्नानायुधैर्वामनकैरुदायुधैः पिङ्गैः पिशङ्गैर्मकरोदराननैः पर्याद्रवद्भिर्विदुराऽन्वरुध्यत १३ केचिद्बभंजुः प्राग्वंशं पत्नीशालां तथापरे सद आग्नीध्रशालां च तद्विहारं महानसम् १४ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् कुंडेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः १५ अबाधंत मुनीनन्ये एके पत्नीरतर्जयन् अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् १६ भृगुं बबंध मणिमान्वीरभद्रः प्रजापतिम् चंडीशः पूषणं देवं भगं नंदीश्वरोऽग्रहीत् १७ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन् १८ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः भृगोर्लुलुंचे सदसि योऽहसत्श्मश्रु दर्शयन् १९

हारं यजमानगृहं महानसं पाकभोजनशालाम् १४ रुरुजुः बभंजुः उत्तरवेद्याः मेखलाः सीमासूत्राणि आज्ञा गुरूणां त्वविचारणीया इति हेतोः नैते दोषभाजिन इति भावः १५ प्रत्यासन्नान् पलायितान् समीपस्थान् पलायितानपि जगृहुः १६। १७ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः १८ स्रुवो हस्ते यस्य

व

वीरभद्रः क्रुद्धस्योत्पाटितवान् १९॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

उज्जहार उद्धृतवान् सदस्यः सभायां स्थितः सन् शपंतं शिवनिन्दां कुर्वंतं दक्षं अक्ष्णा अक्षिसंकोचेन अस्रक् सुचन्त्रेरित वान् २० कलिंगदेशराजस्यानिरुद्धो द्वाहे बलभद्रो यथा द्यूते दंतान् पातितवान् गरिमणि गुरुतरे रुद्रे निंद्यमाने दतः दंतान् दर्शयन् यो जहास पूष्णो रिति पाठे द्विवचनमैन्द्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पूष्णो दंतपातप्राप्त्यर्थं सूचितवान् तथाहि पूषा प्रपिष्टभागोऽदंतको हि तं देवा अब्रुवन्निति विहितस्य पेषणस्य द्विदैवत्याभावान् तत्र तस्य दंता

भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि उज्जहार सदस्थोऽक्ष्णा यः शपंतमसूसूचत् २०
पूष्णश्चापातयद्दंतान्कालिंगस्य यथा बलः शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः २१ आ
क्रम्योरसि दक्षस्य शितधारेण हेतिना छिंदन्नपि तदुद्धर्त्तुं नाशक्नोत्त्र्यंबकस्तदा २२ श
स्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचं हरः विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् २३ दृष्ट्वा
संज्ञपनं योगं पशूनां स पतिर्मखे यजमानपशोः कस्य कायात्तेनाहरच्छिरः २४ साधुवा
दस्तदा तेषां कर्म तत्तस्य शंसताम् भूतप्रेतपिशाचानामन्येषां तद्विपर्ययः २५॥ एवं नीतिवा

क्तव्यं स्यात् नचैतत्संगच्छत इत्याशंक्य तत्रापि तस्य दंतपातोऽवस्थाभेदप्रवृत्तेन द्विवचनेन ज्ञाप्यते अत एव पूष्णो ऽनुग्रहं द्वेधा वक्ष्यति पूषा तु यजमानस्य दद्भिर्भक्षतु पिष्टभुगिति केवलश्चेत् पिष्टभुक् भविष्यति अन्यसहितश्चेद्य जमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः २१ छिंदन्नपीत्यत्र शिर इत्युपरि व्यक्तीभविष्यति त्र्यंबको वीरभद्रः २२ अस्त्रान्वितैर्मं त्रसहितैः न निर्भिन्ना त्वक् यस्य तथाभूतं दक्षं निशेषः २३ स पशूनां पतिः मखे संज्ञपनं योगं कंठनिष्पीडनादिरूपं मारणो

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

गुह्यकालयंकैलासम् २६ ॥ इतिचतुर्थेटीकायांपंचमः ५ ॥ षष्ठेतुदेवसंघेनसह गत्वा भवंविधिः सांत्वयामासदक्षादिजी वितायचर्थमादरात् १ अथदेवगणाःस्वयंभुवेन्यवेदयन्निति द्वितीयेनान्वयः १ शूलादिभिःसंछिन्नानित्रुटितानिभिन्नानिविदीर्णान्यंगानियेषांसहऋत्विग्भिःसभ्यैश्चवर्त्तमानाः २ कस्यदक्षस्ययज्ञे ब्रह्माविष्णुश्चनेयतुःनजग्मतुःयत्रा।

जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः तद्देवयजनंदग्ध्वाप्रातिष्ठद्गुह्यकालयम् २६ ॥ इतिश्रीभागवतेम०च०दक्षयज्ञविध्वंसोनामपंचमोऽध्यायः ५ ॥ मैत्रेयउवाच ॥ अथदेवगणाःसर्वेरुद्रानीकैःपराजिताः शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः २ संछिन्नभिन्नसर्वांगाःसर्त्विक्सभ्याभयाकुलाः स्वयंभुवेनमस्कृत्यकार्त्स्न्येनैतन्न्यवेदयन् २ उपलभ्यपुरैवैतद्भगवानजसंभवः नारायणश्चविश्वात्मानकस्याध्वरमीयतुः ३ तदाकर्ण्यविभुःप्राहतेजीयसिकृतागसि क्षेमायतत्रसाभूयान्नप्रायेणबुभूषताम् ४ अथापियूयंकृतकिल्बिषाभवंयेबर्हिषोभागभाजंपरादुः प्रसादयध्वंपरिशुद्धचेतसाक्षिप्रप्रसादंप्रगृहीतांघ्रिपद्मम् ५ ॥ १ रुद्रकोयज्ञस्तत्रनारायणविरंच्यावपिनागतौ ३ विभुर्ब्रह्मातेजीयसि अतितेजस्विनिपुरुषेकृतागसिसत्यपिस्वयंतत्रकृतागसाबुभूषतांअपराधंकर्त्तुमिच्छतांसानथाबुभूषातेषांक्षेमाय नभूयात्प्रायेणेतिलोकोक्तिःनभवेदेवेत्यर्थः ४ अथापिप्रसादयध्वंक्षमापयतयेभवंतःबर्हिषोयज्ञस्यभागभाजंपरादुःदू

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अध्वरस्यजीवितंपुनःसंधानंप्रार्थयमानाःसंतःयस्मिन्कुपितेसतिसपालोलोकःनभवेन्नस्थेयादित्यर्थः ६ वयंतुतत्र।
गंतुंबिभीमःत्वमेवकिंचिदुपायंविधत्स्वेतिचेत् अतआहनेतियज्ञस्तदानींतनइंद्रःयस्यतत्त्वंबलवीर्ययोःप्रमाणमियत्।
तांचनविदुःवीर्यपराक्रमःपापमितिपाठेऽपराधम् ७।८ कैलासंवर्णयतिजन्मौषधीत्यादिचतुर्दशभिःनरेतरैर्देवैर्जुष्टं

आशासानाजीवितमध्वरस्यलोकःसपालःकुपितेनयस्मिन् तमाशुदेवंप्रिययाविही।
नंक्षमापयध्वंहृदिविद्धंदुरुक्तैः ६ नाहंनयज्ञोनचयूयमन्येयेदेहभाजोमुनयश्चतत्त्वम्
विदुःप्रमाणंबलवीर्ययोर्वायस्यात्मतंत्रस्यकउपायंविधित्सेत् ७ सइत्थमादिश्यसुरा
नजस्तुतैःसमन्वितःपितृभिःसप्रजेशैः ययौस्वधिष्ण्यान्निलयंपुरद्विषःकैलासमद्रिप्र
वरंप्रियंप्रभोः ८ जन्मौषधितपोमंत्रयोगसिद्धैर्नरेतरैः जुष्टंकिंनरगंधर्वैरप्सरोभिर्वृतंस
दा ९ नानामणिमयैःशृंगैर्नानाधातुविचित्रितैः नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः
१० नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः रमणंविहरंतीनांरमणैःसिद्धयोषितां ११

९ रमणंरतिप्रदमित्युत्तरेणान्वयःकथंभूतैर्नानाधातुभिर्विचित्रितैःनानाद्रुमलतागुल्मायेषु १० नानामलानिप्र
स्रवणानियेषुनानाकंदराःसानवश्चयेषुरमणैःसहक्रीडंतीनाम् ११ मयूराणांकेकाभिःस्वनैर्नादितंमदांधैरलिभिर्वि
मूर्छितंमूर्छनारागगतिविशेषःनद्याभंकृतम्रक्तकंठानांकोकिलानांकूजितैःस्तुनत्वंवीतेः॥ ॥ ॥

स्वरैः अन्येषांपतत्रिणांच कूजितैः १२ उद्धस्तैरुन्नतशाखैर्द्रुमैर्द्विजान्पक्षिणआव्हयंतमिवलोके हि हस्त मुन्नसिप्योच्चैःस्वरेणाह्वानमर्थिनांकुर्वन्ति अद्रिश्चोच्छ्रितहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्चतथालक्ष्यतइत्यर्थः व्रजद्भिर्मातङ्गैर्व्र

प्लाविनै रक्तकंठानांकूजितैश्चपतत्रिणाम् १२ आव्हयंतमिवोद्धस्तैर्द्विजान्कामदुघैर्द्रुमैः
व्रजंतमिवमातंगैर्गृणंतमिवनिर्झरैः १३ मंदारैःपारिजातैश्चसरलैश्चोपशोभितम् त
मालैःशालतालैश्चकोविदारासनार्जुनैः १४ चूतैःकदंबैर्नीपैश्चनागपुन्नागचंपकैः पाट
लाशोकबकुलैःकुंदैःकुरवकैरपि १५ स्वर्णार्णशतपत्रैश्चवरवेणुकजातिभिः कुब्जकै
र्मल्लिकाभिश्चमाधवीभिश्चमंडितम् १६ पनसोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः भूर्जै
रोषधिभिःपूगैराजपूगैश्चजंबुभिः १७ खर्जूराम्रातकाम्राद्यैःप्रियालमधुकेंगुदैः द्रु
मजातिभिरन्यैश्चराजितंवेणुकीचकैः १८ कुमुदोत्पलकल्हारशतपत्रवनर्द्धिभिः न
लिनीषुकलंकूजत्खगवृन्दोपशोभितम् १९ मृगैःशाखामृगैःक्रोडैर्मृगेन्द्रैर्ऋक्षशल्य
कैः॥

जंतमिवनिर्झरध्वनिभिर्गृणंतंभाषमाणमिव १३। १४ चूताम्रयोरवांतरजातिभेदः वेणुकीचकयोश्चनीरंध्रसरंध्रत्वे
नभेदः १५ वेणुजातिभिरित्यत्रवेणुकाएलाजातिर्मालती १६। १७ द्रुमजातिभिरित्यत्र ———— जातिरवांतरभेद
सामान्यम् १८ कुमुदादिसमृद्धिभिर्हेतुभिर्नलिनीषुसरस्सुकलंमधुरंयथाभवत्येवंकूजन्तियानिपक्षिवृंदानितैरुप
शोभितम् १९ मृगादिभिर्निर्जुष्टं निषेवितं नाभिभिः कस्तूरी
मृगैः पूर्वं मृगगणाः शृङ्गविशेषणत्वेनोक्ताः इदानीं खानन्यै॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

णेत्यर्थौ नरुत्वं कदलीखंडैः संरुद्धानि आवृतानि नलिनीनां पुलिनानि तैः श्रीः शोभा यस्मिन् २० नंदया गंगया पर्यस्तं प-
रिवेष्टितं सत्याः भवान्याः स्नानेन पुण्यतरम् अतिसुगंधमुदकं यस्याम् २१ तत्र गिरौ वनं च ददृशुः यत्र वने तन्नाम सौगंधि
कं पंकजं भवति जातावेकवचनम् २२ पुरीं वर्णयति नंदा चेति चतुर्भिः सरितौ पुरः बाह्यतो भवतः तीर्थपादस्य हरेः पा

गवयैर्नाभिभिर्व्याघ्रैर्निर्जुष्टं महिषादिभिः कदलीखंडसंरुद्धनलिनीपुलिनश्रिय।
म् २० पर्यस्तं नंदया सत्याः स्नानपुण्यतरोदया विलोक्य भूतेशगिरिं विबुधा विस्मयं यय।
युः २१ ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम् वनं सौगंधिकं चापि यत्र तन्नाम पंकज
म् २२ नंदा चालकनंदा च सरितौ बाह्यतः पुरः तीर्थपादपदांभोजरजसातीव पावने २३
ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः क्रीडंति पुंसः सिंचंत्यो विगाह्य रतिकर्षि
ताः २४ ययोस्तत्स्नानविभ्रष्टनवकुंकुमपिंजरम् वितृषोऽपि पिबंत्यंभः पाययंतो गजा।
गजीः २५ तारहेममहारत्नविमानशतसंकुलाम् जुष्टां पुण्यजनस्त्रीभिर्यथा खं सत।

दांभोरजसा २३ ययोर्विगाह्य प्रविश्य क्रीडंति २४ ययोरंभो विगततृषोऽपि गजाः पिबंति तत्र हे।\\\ डिद्घनम् २६
तुः तासां सुरस्त्रीणां स्नानेन भ्रष्टं गलितं यन्नवं कुंकुमं तेन पिंजरं पीतवर्णं गजीः करिणीः २५ तारं रूप्यं तारादिमयवि
मानानां शतैः संकुलां तडिद्भिः स्त्रीणां घनैर्विमानानां खेन पुर्याः सादृश्यम् २६ ॥ २६ ॥ ६ ॥ ४ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यक्षेश्वरपुरीं हित्वा अतिक्रम्य नंदां नंदनं चालकनंदां च दृष्ट्वा तेदेवा आराद्दूराद्धूर्टं ददृशुरिति चतुर्थेनान्वयः कथंभूतं वनं चित्राणि माल्यानि फलानि छदाश्च पत्राणि येषु तैर्द्रुमैर्दत्ताः स्वकर २७ रक्तकंठखगानामनीकस्य स्वरैर्मंडिताः षट्पदस्वरा यस्मिन् कलहंसानां कुलस्य प्रेष्ठं स्वरं दंडानि पद्मानि तैर्युक्ता जलाशया यस्मिन् २८ वनकुंजरैः संघृष्टा ये हरिचंदनद्रुमाः तत्संबंधिना या

हित्वा यक्षेश्वरपुरीं वनं सौगंधिकं च तत् द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः २७ र-
क्तकंठखगानीकस्वरमंडितषट्पदम् कलहंसकुलप्रेष्ठं खरदण्डजलाशयम् २८ वा-
नकुञ्जरसंघृष्टहरिचंदनवायुना अधिपुण्यजनस्त्रीणां मुहुरुन्मथयन्मनः २९ वैडूर्य-
कृतसोपाना वाप्य उत्पलमालिनीः प्राप्तं किंपुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ३० स योज-
नशतोत्सेधः पादोनविटपायतः पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ३१ त-
स्मिन्महायोगमये मुमुक्षुशरणं सुराः ददृशुः शिवमासीनं त्यक्तामर्षमिवांतकम् ३२
सनंदनाद्यैर्महासिद्धैः शांतैः संशांतविग्रहम्॥

२९ युना पुण्यजनस्त्रीणां मनः अधिकमुन्मथयत् २९ यस्य च उत्पलमालिन्यो वाप्यस्तत्र किंपुरुषैः प्राप्तं वनं दृष्ट्वा पाठांतरे किंपुरुषैः प्राप्ता वापीश्च दृष्ट्वेत्यर्थः ३० योजनशतमुत्सेधः उच्छ्रायो यस्य पादोनैः सर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतो विस्तृतः पर्यक् सर्वतः कृता अचला छाया येन निर्गतं नीडो यस्मात् ३१ मुमुक्षूणां शरणं आश्रयं त्यक्तामर्षोऽतकस्तत्तुल्यम् ३२ तं विशिनष्टि सनंदाद्यैरिति पंचभिः नां



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सनंदाद्यैरितिपंचभिः सख्या कुबेरेणोपास्यमानम् ३३ विद्याउपासनातपश्चित्तैकाग्र्यंयोगः समाधिस्तेषां पंथानंप्रवर्त्त
नद्वारंलोकस्यमंगलंहितंततोवात्सल्यात्स्नेहाच्चरंतम् ३४ संध्याभ्ररुचारक्तवर्णेनाङ्गेनभस्मादिलिंगंचन्द्रलेखांचबि
भ्रतम् ३५ ब्रतिनामासनंबृषीतस्यांब्रह्मप्रवोचंतम् ३६ सव्यंपादपद्मंदक्षिणेऊरौकृत्वाविन्यस्यजानुनिचसव्येबाहुंकृत्वाद
क्षिणबाहुप्रकोष्ठेमणिबंधस्थानेअक्षमालांचकृत्वादक्षिणहस्तकृतयातर्कमुद्रयाउपलक्षितमासीनमित्यर्थः तदुक्तंयो

उपास्यमानंसख्याचभर्त्रागुह्यकरक्षसाम् ३३ विद्यातपोयोगपथमास्थितंतमधीश्वर।
म् चरंतंविश्वसुहृदंवात्सल्याल्लोकमङ्गलम् ३४ लिंगंचतापसाभीष्टंभस्मदंडजटाजि।
नम् अङ्गेनसंध्याभ्ररुचाचन्द्रलेखांचबिभ्रतम् ३५ उपविष्टंदर्भमय्यांबृष्यांब्रह्मसनात
नम् नारदायप्रवोचंतंपृच्छतेशृण्वतांसताम् ३६ कृत्वोरौदक्षिणेसव्यंपादपद्मंचजानु।
नि बाहुंप्रकोष्ठेऽक्षमालामासीनंतर्कमुद्रया ३७ तंब्रह्मनिर्वाणसमाधिमाश्रितंव्युपा।
श्रितंगिरिशंयोगकक्षाम् सलोकपालामुनयोमनूनामाद्यंमनुंप्रांजलयःप्रणेमुः ३८॥

गशास्त्रेएकंपादमथैकस्मिन्विन्यसेदूरुसंस्थितं इतरस्मिंस्तथाबाहुंवीरासनमिदंस्मृतं तर्कमुद्राचोक्तातर्जन्यंगुष्ठ
योरग्रेमिथः संयोज्यचांगुलीःप्रसार्यबंधनंप्राहुस्तर्कमुद्रेतिमांत्रिकाइति ३७ ब्रह्मनिर्वाणंब्रह्मानन्दः तत्रसमाधिरे
काग्र्यंतमाश्रितंयोगकक्षांयोगपट्टंचवामजानुदृढीकरणार्थंविशेषेणोपाश्रितवंतंमननशीलामनवस्तेषामाद्यंमुख्यम् ३८

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अर्हत्तमो विष्णुर्वामनमूर्त्तिर्यस्य कस्य कश्यपस्य ३९ महर्षिभिः सहिताः येनीललोहितमनुवर्त्तंते अपि तस्मैवंदनंच
कुः एवं सर्वैर्नमस्कृतः प्राह कृतः प्रणामो देवैर्यस्मै तम् ४ यद्यपि त्वं नीचवन्मां नमस्करोषि तथाऽपि तवैश्वर्यमहं वेद्मी
साह जानइति विश्वस्येशं जाने तत्र हेतुः जगतो यो निर्याशक्तिः प्रकृतिर्बीजं च शिवः पुरुषस्तयोः कारणं तथापि निरंतरं

सदूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवंदितांघ्रिः उत्थाय चक्रे शिरसाभिवंदनम
र्हत्तमः कस्य यथैव विष्णुः ३९ तथाऽपरे सिद्धगणा महर्षिभिर्ये वै समंतादनुनीललोहि
तम् नमस्कृतः प्राह शशांकशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ४० ब्रह्मोवाच जाने
त्वामीशं विश्वस्य जगतो योनिबीजयोः शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरंतरम् ४१ त्वमे
व भगवन्नेतच्छिवशक्त्योः सरूपयोः विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा ४२॥
त्वमेव धर्मार्थदुघाऽभिपत्तये दक्षेण सूत्रेण ससर्जिथाध्वरम् त्वयैव लोकेऽवसिताश्च
सेतवो यान्ब्राह्मणाः श्रद्दधते धृतव्रताः ४३॥

॥ निर्भेदं यद्ब्रह्म निर्विकारं तदेव त्वामिति जाने ४१ न
नु विरुद्धमेतत्तत्राह त्वमेव सरूपयोरविभक्तयोः शिवशक्त्योः क्रीडन् विश्वसृष्ट्यादिकरोषि ऊर्णनाभिरिव स्वरूपयो
रितिपाठे स्वांशयोः अतो न विरोधः ४२ धर्ममर्थं च दोग्धि यात्रयी तस्या अभिपत्तये रक्षणाय अध्वरं सृष्टवानसि यद्वा
हे धर्मार्थदुघ धर्माद्यभिपत्तये तस्मात्तये दक्षेण सूत्रेण निमित्तेन सेतवो वर्णाश्रममर्यादाश्च अवसिताः निबद्धाः निर्णीता इ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सर्वकर्मफलदातापित्वमेवेत्याह हे मंगलमंगलानांशुभानांकर्मणांकर्त्तुः स्वः स्वर्गपरंमोक्षंवातनुषेअमंगलानांअशुभानांकर्मणांकर्त्तृश्चतमिस्त्रंनरकंतनुषेतत्रकेनहेतुनातदेवतस्मिन्नेवकस्यचिद्विपर्ययोभवतु ४४ त्वत्कोपोऽत्रहेतुरित्यसंभावितमितिकैमुत्यन्यायेनाह नवैसतांसतःरोषोऽभवेत्तवत्वांद्वितीयार्थेषष्ठ्यौपशुंअज्ञंयथाऽभिभवतितद्वत् ४५ अतःयेपृथग्धियःभेददृशः अतःकर्मण्येवदृष्टिर्येषांदुष्टआशयोयेषांपरेषामुदयेनसंपदाअर्पितात्हृदिरुग्येषांअरुं

त्वंकर्मणांमंगलमंगलानांकर्त्तुःस्मलोकेतनुषेस्वःपरंवा अमंगलानांचतमिस्त्रमुल्बणंविपर्ययःकेनतदेवकस्यचित् ४४ नवैसतांत्वच्चरणार्पितात्मनांभूतेषुसर्वेष्वभिपश्यतांतव भूतानिचात्मन्यपृथग्दिदृक्षतांप्रायेणरोषोऽभिभवेद्यथापशुम् ४५ पृथग्धियःकर्मदृशोदुराशयाःपरोदयेनार्पितहृद्रुजोऽनिशम् परान्दुरुक्तैर्वितुदंत्यरुंतुदास्तान्माऽवधीद्दैववधान्भवद्विधः ४६ यस्मिन्यदापुष्करनाभमाययादुरन्तयास्पृष्टधियःपृथग्दृशः कुर्वंतितत्रत्यनुकंपयाकृपांनसाधवोदैवबलात्कृतेक्रमम् ४७॥ तुदामर्मभेत्तारःदैवेनैववधोयेषांतान्भवद्विधःनिरुपमःसाधुःमाऽवधीत्नहन्यात् ४६ प्रत्युतसाधूनांदुष्टमालोक्यानुग्रहमेवकर्त्तुमर्हसीत्याह द्वाभ्यांयस्मिन्देशेयदाकालेस्पृष्टधियोमोहितचित्ताःपृथग्दृशोभवंतितत्रापराधेसाधवोहिअनुकंपयाअनंतरमेवपरदुःखासहिष्णुतयाचित्तप्रकंपेनकृपांकुर्वंतिनतुक्रमंपराक्रमंकुतःदैवबलात्कृतेऽर्थेममैवदैवमेवंभूतंको

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भवाँस्तु अस्पृष्टमतिः अतः समस्तदृक् सर्वज्ञः तया मायया हृत आत्मा येषां तेषु अत एव कर्मानुगत चित्तेषु द्रुह्यापराधे ऽनुग्रहं कर्त्तुमर्हति ४८ एवं सामान्येनोक्त्वा प्रस्तुतमाह कुर्विति त्रिभिः त्वया हतस्य अत एवासमाप्तस्य प्रजापतेरध्वरस्य हे मनो यश्चाध्वरे कुयाज्ञिकाः भागिनोपि तव भागं न ददुः भागार्हत्वमाह येन त्वया मखो निनीयते फलं प्राप्यते ४९। ५०।

भवांस्तु पुंसः परमस्य मायया दुरंतयाऽस्पृष्टमतिः समस्तदृक् तया हतात्मस्वनुकर्मचेतस्स्वऽनुग्रहं कर्त्तुमिहार्हसि प्रभो ४८ कुर्वध्वरस्योद्धरणं हतस्य भोः त्वयाऽसमाप्तस्य मनो प्रजापतेः नयत्र भागं तव भागिनो ददुः कुयज्विनो येन मखो निनीयते ४९ जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः भृगोः श्मश्रूणि रोहंतु पूष्णो दंताश्च पूर्ववत् ५० देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः भवताऽनुगृहीतानामाशु मन्योऽस्त्वनातुरम् ५१ एष ते रुद्र भागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै यज्ञस्ते रुद्र भागेन कल्पतामद्य यज्ञहन् ५२ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कंधे रुद्रसांत्वनं नाम षष्ठोऽध्यायः ६ ॥ श्रीमैत्रेय उवाच इत्यजेनानुनीतेन भवेन परितुष्यता ॥

५१ हे मन्यो अनातुरमारोग्यमस्तु ५१ भागश्च तवास्तित्याह एष इति हे रुद्र यावदृत्विग्यथेयदिस्वयम् यज्ञे कृते यावानुच्छिष्टः अवशिष्टोऽर्थः तावानेष तव भागोऽस्तु हे रुद्र ते न भागेनाद्य यज्ञः कल्पतां संपद्यताम् ५२ ॥ इति चतुर्थे टीकायां षष्ठोऽध्यायः ६ ॥ सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यत्तं प्रवर्त्तयामास दक्षेणेति निरूप्यते १ अजेन योऽनुनीतः प्रार्थितो भवस्तेनाभिहितम् हे महाबाहो विदुर १ अघं पराधम् २ स्वापराधमपहत्यानुगृह्णाति दग्धं शीर्षं यस्य तस्य प्रजापतेः अजस्य मुखं यस्मिन् तत्तथाभूतं शिरोऽस्तु बर्हिषः संबंधिनं भागं मित्रनाम्नो देवस्य ३ प्रकर्षेण कृतानि लग्नान्यंगानि येषां ते भवंतु उच्छेषणं यज्ञावशिष्टम्

अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति १ महादेव उवाच नाघं प्रजेश बालानां व-र्णये नानुचिन्तये देवमायाभिभूतानां दण्डस्तत्र धृतो मया २ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः मित्रस्य चक्षुषेक्षेत भागं स्वं बर्हिषो भगः ३ पूषा तु यजमानस्य द-द्भिर्जक्षतु पिष्टभुक् देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः ४ बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः भवन्त्वध्वर्यवश्चान्ये वस्तश्मश्रुर्भृगुर्भवेत् ५ मैत्रेय उवाच तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् परितुष्टात्मभिस्तात साधु साध्वित्यथाब्रुवन् ६ ततो मीढ्वांसमामन्त्र्य शुनासीराः सहर्षिभिः भूयस्तद्देवयजनं समीढ्वद्वेधसो ययुः ७ ॥

४ येषां त्वंगानि विनष्टानि ते तु अश्विनोर्बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ताश्च भवंतु अध्वर्यवः अन्ये च ऋत्विजः वस्तस्य श्मश्रूण्येव श्मश्रूणि यस्य ५ मीढुष्टमः शिवः तेनोक्तं परितुष्टैश्चित्तैः ६ मीढ्वांसं शिवं त्वया आगत्य सर्वं कार्यं इत्यामंत्र्य संप्रार्थ्य शुनासीरा देवाः सह मीढुषा वेधसा च वर्त्तमानाः समीढ्वद्वेधसः ७ ॥ ७ ॥ ६ ॥ ६

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कार्त्स्न्येन वक्त्रहस्तबाह्वादिसाधारण्यं विधाय ८।९ पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृत आत्मा यस्य सः तदा शरत्कालीनस्वच्छह्रद इवामलोऽभवत् १०।११। १२ यद्यपि यद्यपि विप्रलब्धः पराभूतो मया भवान् तथापि त्वया दण्डो भृतः शिक्षार्थं

विधाय कार्त्स्न्येन च तद्यदाह भगवान्भवः संदधुः कस्य कायेन सवनीयपशोः शिरः ८॥
संधीयमाने शिरसि दक्षो रुद्राभिवीक्षितः सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ९॥
तदा वृषध्वजद्वेषकलिलात्मा प्रजापतिः शिवावलोकादभवच्छरद्ध्रद इवामलः १०।
भवस्तवाय कृतधीर्नाशक्नोदनुरागतः औत्कण्ठ्याद्बाष्पकलया संपरेतां सुतां स्मरन् ११
कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः
१२ दक्ष उवाच भूयाननुग्रह अहो भवता कृतो मे दण्डस्त्वया मयि भृतो यदपि प्रलब्धः
न ब्रह्मबंधुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु १३ विद्यातपोव्रतधरा
न्मुखतः स्म विप्रान्ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक् तद्ब्राह्मणान्परम सर्वविप
त्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः १४॥

ताननूपेक्षितोऽस्मि युक्तमेवैतदित्याह ब्रह्मबंधुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयोरवज्ञा उपेक्षा नास्ति १३ तत्र हेतुमाह विद्येति ब्रह्मा भूत्वा त्वमस्राक् असाक्षीः किमर्थम् आत्मतत्त्वमवितुं यद्वा ब्रह्म वेदं आत्मतत्त्वं च अवितुं संप्रदायप्रवर्त्तनेन ज्ञापयितुमित्यर्थः तत्तस्मात् हे



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अत्र च प्रत्युपकारो नास्तीत्याह योऽसाविति अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन न दृग्गणय्य विस्मृत्य अर्हत्तमस्य निं
दया अर्वागधः पतन्तं मामपात् रक्षितवान् स्वकृतेनैव परानुग्रहेणैव तुष्येत् न मया तत्प्रतिकर्तुं शक्यमित्यर्थः १५
अनुमन्त्रितोऽनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः अनुवर्त्तयामास १६ वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्ध

योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखैर्विगणय्य तन्माम् अर्वाक्
पतन्तमर्हत्तमनिंदयाऽपात् दृष्ट्यार्द्रया स भगवान् स्वकृतेन तुष्येत् १५ श्रीमैत्रेय उवा
च क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमंत्रितः कर्म संतानयामास सोपाध्यायर्त्विगादि
भिः १६ वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः पुरोडाशं निरवपन् वीरसंसर्गशुद्धये
१७ अध्वर्युणात्तहविषा यजमानो विशांपते धिया विशुद्धया दध्यौ तथा प्रादुरभूद्ध
रिः १८ तदा स्वप्रभया तेषां द्योतयंत्या दिशो दश मुष्णंस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवा
जिना १९ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमंडितकुंडलास्यः ॥

ये निवृत्त्यर्थं १७ उपात्तहविषा अध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ हे विशांपते विदुर १८ स्वया प्रभया तेषां तेजो मुष्णन्
तिरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रं बृहद्रथन्तरे वाजौ पक्षौ तद्वता बृहद्रथंतरे पक्षाविति श्रुतेः १९ तमेवानुवर्ण
यति श्याम इति द्वाभ्यां हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमरास्तैर्मंडितं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कुंडलयुक्तमास्यं यस्य कंवादिभिरायुधैर्भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैर्भुजैः पुष्पितः कर्णिकारद्रुववृक्षविशेषः शोभमानः भुजानां हिरण्मयत्वं केयूरकंकणमुद्रिकाद्यलंकारैः २० वक्षसि अधिश्रिता वधूर्लक्ष्मीर्यस्य सः उदारो हासो अवलोकश्च तयोः कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे चामरव्यजने एव राजहंसौ यस्मिन् सः रज्यमानः शोभातिश

कंबुब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिवकर्णिकारः २० वक्षस्याधिश्रितवधूर्वनमाल्युदारहासावलोककलयारमयंश्चविश्वम् पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरिरज्यमानः २१ तमुपागतमालक्ष्य सर्वेसुरगणादयः प्रणेमुः सहसोत्थाय ब्रह्मेंद्रत्र्यक्षनायकाः २२ तत्तेजसाहतरुचः सन्नजिह्वाः ससाध्वसाः मूर्द्ध्नाधृतांजलिपुटा उपतस्थुरधोक्षजम् २३ अप्यर्वाग्वृत्तयो यस्य महिह्यात्मभुवादयः यथामतिगृणंतिस्म कृतानुग्रहविग्रहम् २४ दक्षोगृहीतार्हणसादनोत्तमं यज्ञेश्वरं विश्वसृजां परं गुरुम् ॥ ॥ संनीयमानः २१ ब्रह्मेंद्रत्र्यक्षनायका मुख्या येषां ते २२ हतरुचः तिरस्कृतप्रभाः सन्नजिह्वा गद्गदवाचः ससाध्वसास्तन्महिम्ना क्षुभितचित्ताः उपतस्थुः तुष्टुवुः २३ यस्य महिमहिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेपि यथामति गृणंतिस्म अस्तुवन् कृतः प्रकटीकृतो अनुग्रहार्थं विग्रहो येन तं यद्वा तेषां अर्वाक् वृत्तित्वे हेतुः नैतु यस्य महिमहिमा विभूतिमानरूपादित्यर्थः २४ तत्र तावद्दक्षस्तुतिप्रकारमाह दक्षइति गृहीत



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

आसाद्यार्हणेषुसमर्पितेषुप्रीत्यासार्हणपात्रंस्वयमेवगृहीतमित्यर्थः यद्वाकथंप्रपेदेगृहीतमर्हणसादनोनसंय-
थाभवति तथातद्गृहीत्वाप्रपेद इत्यर्थः गृहीत्वेति पाठस्तुसुगमः गृणन्स्तुवन्प्रपेदेशरणंजगाम दक्षऋत्विक्सद-
स्येशाभृगुब्रह्मेंद्रयोषितः ऋषयश्चतथासिद्धायजमानीचलोकपाः योगीब्रह्माग्निदेवाश्चस्तुवंतिजगदीश्वरं तथागं-
धर्वविद्याधरब्राह्मणाश्चपृथक्प्रनैः २५ ननुसाक्षात्परमेश्वरएवरुद्रः तस्यब्रह्मपुत्रत्वेनजीवत्वमनुकारमात्रंहंतकिमि-
तित्वयाभेददृष्ट्याऽसोऽवज्ञातइतिमांभगवान् आक्षेप्स्यतीत्याशंक्याप्र च्युतस्वरूपस्यजीवधर्मनाद्यंतवमाययैवसं-
गच्छतेनान्यस्येत्याह शुद्धमितिस्वधाम्निस्वस्वरूपेतिष्ठन् भवान् शुद्धंचिन्मात्रंचैतन्यघनः शुद्धत्वेहेतुः उपरतानिवृत्ता

## सुनंदनंदाद्यनुगैर्वृतंमुदागृणन्प्रपेदेप्रयतःकृतांजलिः २५ दक्षउवाच शुद्धंस्वधा-
## म्न्युपरताखिलबुद्ध्यवस्थंचिन्मात्रमेकमभयंप्रतिषिध्यमायांतिष्ठंस्तयैवपुरुष-
## त्वमुपेत्यतस्यामास्तेभवानपरिशुद्धइवात्मतन्त्रः २६ ॥ २६ ॥

१९ अखिलाबुद्ध्यवस्था-
यस्मात् अतःएकंभेदशून्यं अतएवअभयंद्वितीयाद्वैभयंभवतीतिश्रुतेः जीवस्यापिवस्तुतएवंभूतत्वात्तद्वैलक्षण्या-
र्थमुक्तंमायांप्रतिषिध्य अभिभूयस्वतन्त्रएवसन् तयामाययापुरुषत्वंमनुष्यनाट्यमुपेत्यतस्यांमायायांतिष्ठन् अ-
परिशुद्धइवरागादिमानिवास्ते रामकृष्णाद्यवतारे तथाप्रतीयतेभवानित्यर्थः अन्येत्वविद्योपाधयोमायाभिभूताः।
संसरंति अतस्त्वमेवेश्वरोनरुद्रादयइतिभावः अतएवमांभेददृष्टिंभगवान्वारयिष्यति अहंब्रह्माचशर्वश्चजगतः
कारणंपरमित्यादिना २६ ॥ २६ ॥ २६ ॥ २६ ॥ ७ ॥ १ ॥ शिव ॥ राम ॥ कृष्ण

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ऋत्विजो पिस्वस्यापराधंपरिहरंतः स्तुवंति भो अनंजन उपाधिमलशून्य यद्यपिलमेव रुद्रादिदेवतारूपः तथा पिनंदीश्वरशापात्कर्मण्येवदुराग्रहधियः संतस्त्वतत्त्वंनविद्मः किंतु धर्मस्यापूर्वस्योपलक्षणभूतंत्रिरत्त्रयी प्रतिपाद्यमध्वराख्यंतवरूपमस्माभिर्ज्ञातंकीदृशंयदर्थंयस्यसिद्धये अधिदैवंदेवताधिकारेण अदोव्यवस्थाः अत्रइयमेवदेवतानान्येवंभूता नियमाइत्यर्थः यद्वाव्यवस्थाइत्याख्यानंअडागमाद्यभावआर्षःयदर्थं अदद्दइंद्राद्यधिदैवंरूपंविशेषेणास्थिनवानसीत्यर्थः २७ सदस्यास्तुनिरीश्वरेपिदक्षाध्वरेधनलोभेनस्वप्रवृत्ति

ऋत्विजऊचुः तत्त्वंनतेवयमनंजनरुद्रशापात्कर्मण्यवग्रहधियोभगवन्विदामः धर्मोपलक्षणमिदंत्रिवृदध्वराख्यंज्ञातंयदर्थमधिदैवमदोव्यवस्थाः २७ सदस्या ऊचुः उत्पत्त्यध्वन्यशरणउरुक्लेशदुर्गेऽन्तकोग्रव्यालान्विष्टेविषयमृगतृष्ण्यात्म गेहोरुभारः द्वन्द्वश्वभ्रेखलमृगभयेशोकदावेऽज्ञसार्थः पादौकस्तेशरणदकदाया तिकामोपसृष्टः २८॥ ((मनुचिंसानुवन्नाविरक्तिमाशासानाः स्तुवंतिहेशरणद आश्रयप्रदउत्पत्त्यध्व निसंसारमार्गेवर्त्तमानोऽज्ञानांसार्थः समूहस्तेपादौकस्त्वत्पादरूपंनिवासंकदायास्यति अशरणेविश्रामस्थान रहिते उरुक्लेशाएवदुर्गमस्थानानियस्मिन् अंतकएवोग्रोव्यालस्तेनान्विष्टेलक्षीकृते विषयरूपामृगतृष्णायस्मि न् आत्माहंकारास्यदंगेहंचसएवउरुभारोयस्यसः द्वंद्वानिसुखदुःखान्येवश्वभ्राणिगर्त्तायस्मिन् खलाएवमृगाः व्याघ्रादयस्तेभ्योभयंयस्मिन् शोकएवदावाग्निर्यस्मिन्कामेनोपसृष्टःपीडितः २८॥ २८॥ ६॥ ९॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

श्रीरुद्रस्तु पूर्वं मम निंदा दुःसहासीत् इदानीं तु तां न गणयामीत्याह तवेति आशिषा कामेन असक्तैर्निष्कामैः रचितधि
यं अभिनिवेशितचित्तं अविद्यलोकः अविद्यः विद्याहीनो लोकः मां मायदि अपविद्धं जपति आचारभ्रष्टं जपति तज्ज
ल्पनं न तव यः परोऽनुग्रहस्तेन त्वत्सरणा वा योऽनुग्रहस्तेन २९ भृगुस्तु स्वभावतस्तावज्ञानहीना जीवाः अतोऽज्ञानकृतं
ममदुश्चेष्टितं क्षमस्वेति आह यन्माययेति आत्मन आत्मनिश्रितं अनुगतं तव तत्त्वं न विदंति प्रणतानामात्मबंधुश्च ३०।

रुद्र उवाच तव वरद वरांघ्रावाशिषेहाखिलार्थे ह्यपि मुनिभिरसक्तैरादरेणार्हणीये य
दि रचितधियं माऽविद्यलोकोऽपविद्धं जपति न गणये तत्त्वत्परानुग्रहेण २९ भृगुरुवा
च यन्माययागहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपंतः नात्मन् श्रि
तं तव विदंत्यधुनाऽपि तत्त्वं सोयं प्रसीदतु भवान् प्रणतात्मबंधुः ३० ब्रह्मोवाच नैतत्स्व
रूपं भवतोऽसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ज्ञानस्य चार्थस्य गुणस्य चाश्रयो।
मायामयाद्व्यतिरिक्तो यतस्त्वम् ३१ इंद्र उवाच इदमप्यच्युत विश्वभावनं वपुरानंदकरं मनोदृ

ब्रह्मादयो न विदंतीति भृगुणोक्ते तदसहमानो ब्रह्मा तत्त्वज्ञानमाविष्कुर्वन्निवाह नैतदिति पदार्थभेदग्राहैः शास्त्रा
हकैरिंद्रियैर्गुणस्य इंद्रियस्य यद्वा ज्ञानार्थयोः कारणस्य सत्वादेः अत एव असतः मायामयात् व्यतिरिक्तो भवान् ३१ इं
द्रस्तु इंद्रियविषयः सर्वोपि मिथ्येति ब्रह्मणोक्तमसहमान आह इदं तव वपुरपि उपपन्नमेव न तु प्रपंचवदनिर्वचनीय

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तयाऽनुपपन्नं क्रूराणां विद्विषः क्षपयंतीनि तथा तैर्भुजदण्डैरुपलक्षितम् ३२ ऋत्विजां पत्न्यस्तुवन्ति यज्ञोऽयं तवय
जनाय त्वां यष्टुं केन ब्रह्मणा पूर्वं सृष्टः हे यज्ञात्मन् तन्नो यज्ञं नलिनकांत्या दृशा नेत्रेण पुनीहि पवित्रं कुरु कथंभूतं यज्ञं
शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वद्विभाप्रतीति र्यस्य स चासौ शांतमेधश्च उपरतोत्सवः मेधशब्देन पशु
हिंसायुत्सवो लक्ष्यते शवमुद्दिश्य कं तत्र शेते इति तथा पश्यंतम् आभेति सबोधनं वा ३३ ऋषयस्तु कर्माण्यनुतिष्ठतस्तु

क्रूरविद्विट्क्षपणैरुदायुधैर्भुजदंडैरुपपन्नमष्टभिः ३२ पत्न्य ऊचुः यज्ञोऽयं तव यज
नाय केन सृष्टो विध्वस्तः पशुपतिनाद्य दक्षकोपात् तन्नस्त्वं शवशयनाभशांतमेधं य
ज्ञात्मन्नलिनरुचा दृशा पुनीहि ३३ ऋषय ऊचुः अनन्वितं ते भगवन्विचेष्टितं यदात्म
नाचरसि हि कर्म नाज्यसे विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्तन्तीं भवा
न् ३४ सिद्धा ऊचुः अयं त्वत्कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः तृषा
र्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसंपन्नवन्नः ३५॥ ज्येन तत्फलेन च युज्यन्ते भ

गवति तद्भावमालक्ष्य विस्मिताः स्तुवंति अनन्वितं अघटमानं यद्यस्मात् आत्मना स्वयं कर्माचरसि अनुतिष्ठसि
न त्वज्यसे लिप्यसे यतश्च अन्ये विभूतये संपदे ईश्वरीं लक्ष्मीं उपसेदुः भेजुः यद्वा यत इति सार्वविभक्तिकस्तसिः यामित्य
र्थः भवांस्तु स्वयमेवानुवर्त्तमानां तां न मन्यते नाद्रियते ३४ सिद्धास्तु तत्कथासुखमभिनंदंतः स्तुवंति अयं नो गजः त्वत्क
थैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्यामवगाढः प्रविष्टो दावाग्नितुल्यं संसारतापं न संस्मरति न च ततो निर्गच्छति ब्रह्म



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यजनीनोरक्षपत्नीस्तोति तेस्वागतंभद्रमागमनंजातंहे अधीशयथाशिरसाहीनः कबंधमात्रःपुरुषोंगैः करचरणाद्य
वयवैःशोभनैरपिनशोभतेतथात्वांविनाकेवलंप्रयाजाद्यंगैर्मखोनशोभते अतोनःश्रियासहत्रायस्वत्वदङ्गत्वान्कुर्वि
त्यर्थः ३६ लोकपालास्त्वीश्वरत्वाभिमानारूढाभगवतस्तत्वमपश्यंतऊचुःदृष्टःकिन्नदृष्टइत्यर्थःकुतःअसद्ग्रहैःपुंस्त्व
माविष्टलिंगत्वात्सस्वप्रकाशरूपाभिर्दृग्भिरिंद्रियैःअयंभावःशुद्धचित्तानांत्वंशुद्धसत्वमूर्तिर्भासिअस्माकंतुबहिर्मुखें

**यजमान्युवाच स्वागतन्तेप्रसीदेशतुभ्यंनमः श्रीनिवासःश्रियाकांतयात्राहिनःत्वा।**
**मृतेऽधीशनांगैर्मखःशोभतेशीर्षहीनःकबंधोयथापूरुषः ३६ लोकपालाऊचुः दृष्टः।**
**किन्नोदृग्भिरसद्ग्रहैस्त्वंप्रत्यग्द्रष्टादृश्यतेयेनदृश्यम् मायात्येषाभवदीयाहिभूमन्।**
**यस्त्वंषष्ठःपंचभिर्भासिभूतैः ३७ योगेश्वराऊचुः प्रेयान्नतेऽन्योऽस्त्यमुतस्त्वयिप्रभोवि।**
**श्वात्मनीक्षेन्नपृथग्यआत्मनः अथापिभक्त्येशतयोपधावतामनन्यवृत्त्याऽनुगृहाणव**
**त्सल ३८ जगदुद्भवस्थितिलयेषुदैवतोबहुभिद्यमानगुणयात्ममायया॥** इंद्रियाणांपंचभू

तोपलक्षितोजीवविशेषइवावभासि अतस्त्वमस्मदिंद्रियगोचरोनभवसिधिगस्मज्जीवितमिति ३७ योगेश्वरास्तदभे।
देनभजतामनुग्रहभाक्त्वंमन्यमानाःस्वामिभृत्यभावेनभजतामप्यनुग्रहंप्रार्थयमानाःस्तुवंतिद्वाभ्यांप्रेयानिति विश्वा।
त्मनिपरब्रह्मणित्वयियआत्मनःपृथक्त्वंनेक्षेतअमुतःअमुष्मादन्यःतेप्रेष्ठोनास्तिआत्मनोजीवान्पृथक्त्वंनेक्षेतेतिवा।
हेभक्तवत्सलभक्तजनप्रिय अनन्यवृत्त्याअव्यभिचारिभक्त्याभजतोऽनुगृहाणेत्यर्थः ३८ अव्यभिचारिणीभक्तिःकथंस्यात्भ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वहुत्वादित्याशंक्याहुः जगनउद्भवादिषु निमित्तेषु दैवतो जीवादृष्टात् बहुधा भिद्यमाना गुणा यस्यास्तया स्वमायया आत्म
निस्वरूपे रचिता ब्रह्मादिभेदमतिर्येन तस्मै स्वसंस्थया केवलस्वरूपावस्थानेन च विनिवर्त्तितो भेदभ्रमो गुणाश्च तद्व
तव आत्मनि येन तस्मै ॐ शब्दब्रह्मणोति नमस्त इति श्रितं स्वीकृतं सत्त्वं येन अतः भक्त्यादिफलप्रसवित्रे सत्वगुणत्वं
निर्गुणत्वं चैकस्य कथमित्याशंक्याह यस्य काष्ठां तत्त्वं नाहं वेद्मि अपरे ब्रह्मादयश्च न विदुस्तस्मै ४० अग्निस्तु यज्ञमूर्त्तिं
प्रणमति यस्य तेजसा स्फुरत् सुसमिद्धं प्रदीप्तं तेजो यस्य सोऽहं प्रशस्ते अध्वरे हविर्वहामि तं यज्ञियं यज्ञाय हितं पालकं यज्ञं

रचितात्मभेदमतये स्वसंस्थया विनिवर्त्तितभ्रमगुणात्मने नमः ॐ ब्रह्मोवाच न॥
मस्ते श्रितसत्त्वाय धर्मादीनां च सूतये निर्गुणाय च यत्काष्ठां नाहं वेदापरेऽपि च ४०॥
अग्निरुवाच यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहे स्वध्वर आज्यसिक्तम् तं यज्ञि
यं पंचविधं च पंचभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम् ४१ देवा ऊचुः पुरा कल्पापाये
स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन्सलिल उरगेंद्राधिशयने॥ यज्ञमूर्त्तिं पंच
विधत्वमैतरेयके उक्तं स एष यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति पंचभिर्यजुर्भि
र्मन्त्रैः स्विष्टं सुपूजितं तथा च श्रुतिः आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति
पंचाक्षरं द्व्यक्षरो वषट्कार इत्येतस्मात् इति श्चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदत्वि॥
ति ४१ देवास्तु वं तियद्यपि सत्यं वयमपि देवास्तथाऽपि जगदाद्यंतयोस्त्वमेव नान्यः कश्चिदित्याहुः पुरेति कल्पापाये प्रलये।

विकृतङ्कृत्वाजनांदृष्टीकल्पसंहारसमेत्मवाचः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पुमान्उरगेंद्रएवाधिकंशय्यायस्मिन्शेषेशयनंकरोषिसिद्धैर्जनलोकादिवासिभिर्विमृशिनाविचिंतिनाऽध्यात्म
परवीज्ञानमार्गोयस्यसएवत्वंयइदानीमक्ष्णोःपथिचरसिप्रत्यक्षोऽसिअवसिरक्षसि ४२ गन्धर्वाप्सरसस्तुवयं
भियाकेवलंसर्वानपिपरमेश्वरत्वेनोपश्लोकयामःत्वमेवतुपरमेश्वरःअन्येतुत्वदंशाएवेत्याहुःअंशांशाइतिहेवि

पुमान्शेषेसिद्धैर्हृदिविमृशिताध्यात्मपदविःसएवाद्याक्ष्णोर्यःपथिचरसिभृत्या-
नवसिनः ४२ गंधर्वाऊचुः अंशांशास्तेदेवमरीच्यादयएतेब्रह्मेंद्राद्यादेवगणारुद्रपु-
रोगाः क्रीडाभांडंविश्वमिदंयस्यविभूमन्तस्मैनित्यंनाथनमस्तेकरवाम ४३ वि-
द्याधराऊचुः त्वन्माययाऽर्थमभिपद्यकलेवरेऽस्मिन्कृत्वाममाहमितिदुर्मति रुत्प-
थैःस्वैःक्षिप्तोप्यसद्विषयलालसआत्ममोहंयुष्मत्कथाऽमृतनिषेवकउद्व्युदस्येत्
४४ ब्राह्मणाऊचुः त्वंक्रतुस्त्वंहविस्त्वंहुताशःस्वयंत्वंहिमंत्रःसमिद्दर्भपात्राणिच ।
त्वंसदस्यर्त्विजोदंपतीदेवताअग्निहोत्रंस्वधासोमआज्यंपशुः ४५ ॥

भूमन्महत्तमक्री-
डाभांडंक्रीडोपकरणंविश्वंब्रह्मांडंयस्यतस्मैनेननमनंकुर्मः ४३ विद्याधरास्तुवंति केवलंविद्याभिःसंपदःप्राप्य
तेऽहंकारादिव्यामोहनिवृत्तिस्तुत्वत्कथाश्रवणंविनानास्तीत्याहुः अर्थंपुरुषार्थसाधनंकलेवरंअभिपद्यप्राप्य
त्वन्मायया स्मिन्ममेत्यहमितिचाभिमानंकृत्वाइममात्ममोहंयुष्मत्कथामृतनिषेवकःउत्तउच्चैर्व्युदस्येत्परित्यजे-

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ननुस्वैःपुत्रादिभिरधिक्षिप्तोदुःखितःसन्परित्यजदेवनेयात्कुःक्षिप्तोऽपिदुर्मतिःअसत्सुविषयेष्वेवलालसान्
व्यायस्यसः ४४ ब्राह्मणास्तुवंतिस्म मिति त्रिभिःसदस्याश्चर्त्विजश्च ४५ ॥ ❖ ॥ गांपृथ्वींरसायाःरसातलात् दं
ष्ट्रयात्युज्जहर्थविशेषणोद्धृतवानसि योगिभिःस्तूयमानःहेत्रयीगात्रवेदमूर्त्ते यज्ञोयागःसयूपःक्रतुस्तद्विशेषस्त
द्रूपोयज्ञसंकल्परूपइतिवा यज्ञःक्रतुःकर्मयस्येतिवा ४६ सत्वमस्माकंत्वद्दर्शनमाकांक्षतांप्रसीद अस्मद्यज्ञमप्युद्

त्वंपुरागांरसायामहासूकरोदंष्ट्रयापद्मिनींवारणेंद्रोयथा स्तूयमानोनदल्लीलया
योगिभिर्व्युज्जहर्थत्रयीगात्रयज्ञक्रतुः ४६ सप्रसीदत्वमस्माकमाकांक्षतांदर्शनं
तेपरिभ्रष्टसत्कर्मणाम् कीर्त्यमानेनृभिर्नाम्नियज्ञेशतेयज्ञविघ्नाःक्षयंयांतितस्मै
नमः ४७ मैत्रेयउवाच इतिदक्षःकविर्यज्ञंभद्ररुद्राबमर्शितम् कीर्त्यमानेहृषीकेशे
संनिन्येयज्ञभावने ४८ भगवान्स्वेनभागेनसर्वात्मासर्वभागभुक् दक्षंबभाषआभा
ष्यप्रीयमाणइवानघ ४९ श्रीभगवानुवाच अहंब्रह्माचशर्वश्चजगतःकारणंपरम्

रेत्यर्थः नचाशक्यंतवैतत् यतस्तवनाम्निकीर्त्यमानएवयज्ञविघ्नाःक्षयंयांतिएवंप्रभावोयस्तस्मैनमः ४७ इत्यनेन
प्रकारेणसर्वैःकीर्त्यमानेहेभद्रविदुरसंनिन्येप्रवर्त्तयामास ४८ सर्वात्मतयासर्वभागभोक्ताऽपिभगवान्निजानंदतृप्तो
ऽपिस्वेनभागेनत्रिकपालपुरोडाशेनप्रीयमाणइवदक्षमाभाष्यसंबोध्यवचोबभाषे ४९ योऽहंजगतःकारणंआत्माचेश्व



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सएवब्रह्माचशर्वश्चेत्यन्वयः ५० कुतइत्यतआह अहमेवात्ममायामधिष्ठायजगत्सृष्ट्यादिकुर्वन्सन्सचक्रियोचितां संज्ञांधारयामि ५१ तस्मिन्केवलेऽद्वितीयेसमानासमानजातीयभेदरहितेब्रह्मणिमयिब्रह्मरुद्रौभूतानिचभेदेनाज्ञःप श्यतीत्यर्थः ५२ विद्वांस्तुभेदंनपश्यतीतिसदृष्टांतमाह यथेति ५३ तस्मादेवमैक्यंपश्यन्कृतार्थोभवतीत्याह त्रयाणांएको

आत्मेश्वरउपद्रष्टास्वयंदृगविशेषणः ५० आत्ममायांसमाविश्यसोऽहंगुणमयींद्विज॥
सृजन्रक्षन्हरन्विश्वंदध्रेसंज्ञांक्रियोचिताम् ५१ तस्मिन्ब्रह्मण्यद्वितीयेकेवलेपरमा
त्मनि ब्रह्मरुद्रौचभूतानिभेदेनाज्ञोऽनुपश्यति ५२ यथापुमान्नस्वाङ्गेषुशिरःपाण्यादिषु।
क्वचित् पारक्यबुद्धिंकुरुतेएवंभूतेषुमत्परः ५३ त्रयाणामेकभावानांयोनपश्यतिवैभि
दाम् सर्वभूतात्मनांब्रह्मन्सशांतिमधिगच्छति ५४ मैत्रेयउवाच एवंभगवतादिष्टः
प्रजापतिपतिर्हरिम् अर्चित्वाक्रतुनास्वेनदेवानुभयतोऽयजत् ५५ रुद्रंचस्वेनभा।
गेनत्युपाधावत्समाहितः कर्मणोदवसानेनसोमपानितरानपि उदवस्यसहर्त्विग्भिः
सस्नावब्भृथंततः ५६ तस्माअप्यनुभावेनस्वेनैवावाप्तराधसे॥ ५५ भावः स्वरूपंयेषाम् ५४ स्वे
नक्रतुनात्रिकपालेष्टाउभयतःअंगैःप्रधानेनच ५५ स्वेनभागेनयज्ञावशिष्टेनउद वस्यतेसमाप्यतेऽनेनेत्युदवसानं
तेनकर्मणासोमपानितरानपिउपाधावदित्यनुषंगः ततश्चउदवस्यकर्मसमाप्यअवभृथरूपंयथाभवतितथास्नातव

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

रापसेप्राप्तसिद्धयेनस्तातापि ५७।५८ आवृंक्तेभजनेस्मअनन्यभावानामैकेवगतिःयस्तंप्रलयकालेसुप्ताशक्तिरी।
श्वरमिव ५९ वृहस्पतेःशिष्यान्मयाश्रुतम् ६०परंपवित्रंयआकर्ण्यतथाऽनुकीर्त्तयेत्सःआत्मनःपरस्यापिअघंसंसा
रव्यसनंसर्वदाधुनोति ६१ ॥इतिश्रीभागवतेमहापु०चं०टी०सप्तमोध्यायः७ ॥दक्षकन्याऽन्वयेप्रासादक्षयज्ञकथोदिता

धर्मएवमतिंदत्वात्रिदशास्तेदिवंययुः ५७ एवंदाक्षायणीहित्वासतीपूर्वकलेवरम् ज
ज्ञेहिमवतःक्षेत्रेमेनायामितिशुश्रुम ५८ तमेवदयितंभूयआवृंक्तेपतिमम्बिका ॥
अनन्यभावैकगतिंशक्तिःसुप्तेवपूरुषम् ५९ एतद्भगवतःशंभोःकर्मदक्षाध्वरद्रुहः॥
श्रुतंभागवताच्छिष्यादुद्धवान्मेबृहस्पतेः ६० इदंपवित्रंपरमीशचेष्टितंयशस्यमायुष्य
मघौघमर्षणम् योनित्यदाकर्ण्यनरोऽनुकीर्त्तयेत् धुनोत्यघंकौरवभक्तिभावतः ६१
॥इतिश्रीभागवतेम०चं०दक्षयज्ञसंधानंनामसप्तमोध्यायः ७ ॥ श्रीमैत्रेयउवाच॥
सनकाद्यानारदश्चऋभुर्हंसोरुणिर्यतिः नैतेगृहान्ब्रह्मसुतात्यावसन्नूर्ध्वरेतसः १॥

मनुपुत्रान्वयेप्राप्ताध्रुवचर्याऽथपंचभिः १अष्टमेगुरुदारोक्तिरोषमत्सरतःपुरात् निर्गतेनध्रुवेणाहतपसातोषणं
हरेः २ एवंतावत्मनुकन्यान्वयोक्तैवमरीच्यादीनांब्रह्मपुत्राणांवंशावर्णिताःतत्रावशिष्टंकिंचिदाह सनकाद्याइ
तिभावसन्नाश्रिताःऊर्ध्वरेतसोनैष्ठिकाःअतस्तेषांवंशोनास्ति १॥ २ ॥ १ ॥ ३ ॥ ५ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अधर्मोऽपिब्रह्मपुत्रस्तस्यवंशमाह मृषेतिचतुर्भिः दंभःपरप्रतारणंमायातदुचिताचेष्टातयोःसोदरयोरपिदांपत्य धर्मांशितयाएवमुपर्यपिअप्रजःअपुत्रः२ निकृतिःशठतायत्याभ्यांकलिश्चतस्यस्वसादुरुक्तिश्चेत्यर्थः ३ यातना तीव्रवेदना ४ प्रतिसर्गोऽनुसर्गएवयद्वाप्रतिसर्गःप्रलयःअधर्मस्यप्रलयहेतुत्वात्प्रतिसर्गत्वम् एतत् एतमधर्म।

मृषाऽधर्मस्यभार्यासीद्दंभंमायाञ्चशत्रुहन् असूतमिथुनंतत्तुनिर्ऋतिर्जगृहेऽप्रजः २ तयोःसमभवल्लोभोनिकृतिश्चमहामते ताभ्यांक्रोधश्चहिंसाचयद्दुरुक्तिःस्वसाकलिः ३ दुरुक्तौकलिराधत्तभयंमृत्युंचसत्तम तयोश्चमिथुनंजज्ञेयातनानिरयस्तथा ४ संग्रहेणमयाख्यातःप्रतिसर्गस्तवानघ त्रिःश्रुत्वैतत्पुमान्पुण्यंविधुनोत्यात्मनोमलम् ५ अथातःकीर्त्तयेवंशंपुण्यकीर्त्तेःकुरूद्वह स्वायंभुवस्यापिमनोर्हरेरंशांशजन्मनः ६ प्रियव्रतोत्तानपादौशतरूपापतेःसुतौ वासुदेवस्यकलयारक्षायांजगतःस्थितौ ७ जायेउत्तानपादस्यसुनीतिःसुरुचिस्तयोः सुरुचिःप्रेयसीपत्युर्नेतरायत्सुतोध्रुवः ८ एकदासुरुचेःपुत्रमंकमारोप्यलालयन्॥

५ वंशंपुण्यमितिवर्णनद्वारा पुण्यहेतुत्वात् ५ मनोःपुत्रवंशंहरेरंशोब्रह्मातस्यांशात् देहाद्वाज्जन्मयस्य ६ जगतोरक्षायांस्थितौ ७ सुनीतिःसुरुचिश्चजायेतयोर्मध्ये ८ तयोःप्रियाप्रियत्वंप्रपंचयन् ध्रुवचरित्रमाह पंचभिरध्यायैःसुरुचेः॥ छ ॥ १ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पुत्रमुत्तमसंज्ञंलालयन् ९ तथाअंकारोहणंचिकीर्षमाणम् १० गर्वोक्तिमेवाह त्रिभिर्नेति नृपतेर्धिष्ण्यंआस नंनृपात्मजोऽपिभवान् नारोढुमर्हति ११। १२ पुरुषमीश्वरम् १३ मिषंतंपश्यंतम् सन्नवाचकुण्ठितवाचम्॥

उत्तमन्नारुरुक्षंतंध्रुवंराजाभ्यनन्दत ९ तथाचिकीर्षमाणन्तंसपत्न्यास्तनयंध्रुवम् स्रुरुचिःशृण्वतोराज्ञःसेर्ष्यमाहातिगर्विता १० नवत्सनृपतेर्धिष्ण्यंभवानारोढुमर्हति नगृहीतोमया त्वंकुक्षावपिनृपात्मजः ११ बालोऽसिबततनात्मानमन्यस्त्रीगर्भसंभृतम् नूनंवेदभवान्यस्यदुर्लभेर्थेमनोरथः १२ तपसाराध्यपुरुषंतस्यैवानुग्रहेणमे गर्भेत्वंसाधयात्मानंयदीच्छसिनृपासनम् १३ मैत्रेयउवाच मातुःसपत्न्याःस्रुदुरुक्तिविद्धःश्वसन्रुषादंडहतोयथाहिः हित्वामिषंतंपितरंसन्नवाचंजगाममातुःप्ररुदन्सकाशम् १४ तंनिःश्वसंतंस्फुरिताधरोष्ठंस्रुनीतिरुत्संगउदूह्यबालम् निशम्यतत्पौरमुखान्नितांतंसाविव्यथेयद्गदितंसपत्न्याः १५ सोत्सृज्यधैर्यंविललापशोकदावाग्निनादावलतेवबाला वाक्यंसपत्न्याःस्मरतीसरोजश्रियादृशाबाष्पकलामुवाह १६॥ ९। १४ उदूह्यआरोप्य अन्तःपुरजनमुखात्श्रुत्वा १५ शोकएवदावाग्निस्तेनदावाग्निगतालतेवस्थितासावालाविलापंचकार १६॥ १६॥ १६॥ ६॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वृजिनस्य दुःखस्य अमंगलम् अपराधं परेषु माऽऽमंस्थाः यद्यतः परेभ्यो दुःखं ददाति यः सः स्वदत्तमेव दुःखं भुंक्ते।
१७ दुर्भगया मया उदरे गृहीतः तस्या एव स्तन्येन वृद्धश्च दुर्भगत्वमेवाह यां आगिडस्पतिर्भूपतिर्भार्येति वोढुं स्वीकर्तुं
विलज्जते वा शब्दात् दासीत्यपि १८ पितृभार्यात्वेन मात्रा समा मातुः सपत्नी तया ऽपि यदुक्तम् तपसा आराध्य पुरुषमि-

दीर्घं श्वसंती वृजिनस्य पारमपश्यती बालकमाह बाला माऽमंगलं तात परेषु मंस्था भुंक्ते जनो यत्परदुःखदस्तत् १७ सत्यं सुरुच्याऽभिहितं भवान्मे यद्दुर्भगाया उदरे गृहीतः स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम् १८ आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्राऽपि यदव्यलीकम् आराधयाधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा १९ यस्यांघ्रिपद्मं परिचर्य विश्वविभावनायात्तगुणाऽभिपत्तेः अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्मश्वसनाभिवंद्यम् २० तथा मनुर्वो भगवान्पितामहो यमेकमत्या पुरुदक्षिणैर्मखैः इष्ट्वाभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् २१ तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्ध-

त्यादि तत् आतिष्ठ कुरु अध्यासने यदीच्छसि १९ परिचर्य निषेव्य विश्वस्य विभावनाय पालनाय आत्ता (?)ति मू॥
स्वीकृता गुणाभिपत्तिः सत्वगुणाधिष्ठानं येन तस्य जितआत्मा मनः श्वसनः प्राणश्च यैस्तैरभिवंद्यम् २० एकमत्या सर्वात्

शरणं व्रज ततो भजस्व नान्यस्मिन् भावो यस्य तस्मिन् निजधर्मैर्भाविते शोधिते २२ तमेवेत्यनेन सूचितं सर्वोत्तमत्वं प्रपंचयति नान्यमिति हस्तेन गृहीतं दीपवत्सङ्म्यया इतरैर्ब्रह्मादिभिः २३ संजल्पितं विलापं ततअर्थ्यस्यागमो यस्मात्त।

अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् २२ नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कंचन यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरंग विमृग्यमाणया २३ श्रीमैत्रेय उवाच एवं संजल्पितं मातुराकर्ण्यार्थागमं वचः सं नियम्यात्मनात्मानं निश्चक्राम पितुः पुरात् २४ नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम् स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः २५ अहो तेजः क्षत्रियाणां मानभंगममृष्यताम् बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः २६ श्रीनारद उवाच नाधुनाऽप्यवमानं ते सन्मानं वाऽपि पुत्रक लक्षयामः कुमारस्य सक्तस्य क्रीडनादिषु २७ विकल्पे विद्यमानेऽपि न ह्यसंतोषहेतवः पुंसो मोहमृते भिन्ना यल्लोके निजकर्मभिः २८ परितुष्येत्ततस्तात तावन्मात्रेण पूरुषः दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः २९॥ इत्थाभूतं वचः आकर्ण्य २४।२५ विस्मित इत्युक्तं तदेवाह अहो तेजः प्रभावः २६।२७ विकल्पे मानापमानविवेके सत्यपि भिन्ना न संति किंतु मोहकल्पिता एवेत्यर्थः कुतः यत्सुखं दुःखं वा तन्निजकर्मभिरेव भवतियतः २८ उपशमोपदेशेन निवर्त्तयति परितुष्येदि-

त्याह निषद्भिः ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलं वदन्ति ज्ञात्वा परितुष्येत्संतोषमेव कुर्यात् २९॥ २९॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

दुष्करश्चतवायमुद्यमइत्याह अथेतिद्वाभ्याम् यस्यप्रसादमवरोद्धुंप्राप्तुमिच्छसि ३० निःसंगेनतीव्रयोगेनसमाधिनाम्रगयंतोऽपियस्यपदवींमार्गेनविदुःसदेवोदुराराध्यः ३१ श्रेयसांकालेदृढत्वे ३२ स्फखदुःखयोर्मध्येसुखेसति पुण्यंक्षीयतइतिदुःखेसतिपापंक्षीयतइत्यात्मानंतोषयन् तमसःपारंमोक्षंप्राप्नोति ३३ किंचगुणैरधिकात्पुंसइति

अथमात्रोपदिष्टेनयोगेनावरुरुत्ससि यत्प्रसादंसवैपुंसादुराराध्योमतोमम ३० मुनयःपदवींयस्यनिःसंगेनोरुजन्मभिः नविदुर्म्रगयंतोऽपितीव्रयोगसमाधिना ३१ अतोनिवर्त्ततामेषनिर्बन्धस्तवनिष्फलः यतिष्यतिभवान्कालेश्रेयसांसमुपस्थिते ३२ यस्ययद्दैवविहितंसतेनसुखदुःखयोः आत्मानंतोषयन्देहीतमसःपारमृच्छति ३३ गुणाधिकान्मुदंलिप्सेदनुक्रोशंगुणाधमात् मैत्रींसमानादन्विच्छेन्नतापैरभिभूयते ३४ ध्रुवउवाच सोऽयंशमोभगवतासुखदुःखहतात्मनाम् दर्शितःक्रपयापुंसांदुर्दर्शोऽस्मद्विधैस्तुयः ३५ अथापिमेऽविनीतस्यक्षात्त्रंघोरमुपेयुषः सुरुच्यादुर्वचोबाणैर्नभिन्नेश्रयतेहृदि ३६ पदंत्रिभुवनोत्कृष्टंजिगीषोःसाधुवर्त्ममे॥

ल्यब्लोपेपंचमीतंदृष्ट्वाप्रीतिंकुर्यान्नत्वसूयामित्यर्थः अनुक्रोशंक्रपांलिप्सेत् नतुतिरस्कारंसमानान्मैत्रीनतुस्पर्द्धाम् ३४ । ३५ क्षात्त्रंस्वभावंप्राप्तवतः अतएवाविनीतस्यदुर्वाक्यबाणैर्भिन्नेहृदिनश्रयतेनतिष्ठति ३६ अन्यैरनधिष्ठितम् त्रिभुवनेउत्कृष्टंपदं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

जितुमिच्छोर्मेसाधुवर्त्ममार्गंब्रूहि ३७ अंकजइतिपाठेउत्संगाज्जातोयोनारदःसभवान्वीणांविनुदन्वादयन् हिताय
अटति ३८। ३९ निःश्रेयसस्यअभिप्रेतार्थस्यपन्थाः कोसावित्यतआह भगवान्वासुदेवःअतएवतंभज ४०। ४१म
धुवनाख्यंयमुनायास्तटंगच्छयत्रमधुवने ४२ अध्ययनाद्यभावमपिआत्मनउचितानियोग्यानिदेवतानमस्कारादी

ब्रह्मसमतित्वभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ३७ नूनंभवान्भगवतोयोऽंगजःपरमेष्ठिनः।
वितुदन्नटतेवीणांहितार्थंजगतोऽर्कवत् ३८ मैत्रेयउवाच इत्युदाहृतमाकर्ण्यभगवा-
न्नारदस्तथा ध्रुवः प्रत्याहतंबालंसद्वाक्यमनुकंपया ३९ श्रीनारदउवाच जनन्याऽभि
हितःपंथाःसवैनिःश्रेयसस्यते भगवान्वासुदेवस्तंभजतत्प्रवणात्मना ४० धर्मार्थका-
ममोक्षार्थंयइच्छेच्छ्रेयआत्मनः एकंह्येवहरेस्तत्रकारणंपादसेवनम् ४१ तत्तातग-
च्छभद्रंतेयमुनायास्तटंशुचि पुण्यंमधुवनंयत्रसान्निध्यंनित्यदाहरेः ४२ स्नात्वाऽनु-
सवनंतस्मिन्कालिंद्याःसलिलेशिवे कृत्वोचितानिनिवसन्नात्मनःकल्पितासनः ४३
प्राणायामेनत्रिवृताप्राणेंद्रियमनोमलम् शनैर्व्युदस्याभिध्यायेन्मनसागुरुणागुरुम् ४४

नियमनियमाउक्ताः आसनकल्पनंचकुशादिभिःस्वस्तिकादिभिश्च ४३ प्राणेंद्रियमनसांमलंचांचल्यंनिरुक्त्वेति [व्युदस्य] इति प्राणायामप्रत्याहारौधारणामाह अभिध्यायेदित्यादिषड्भिःगुरुणाधीरेणमनसागुरुंश्रीहरिम् ४४ ॥ ध्रु०॥

व्युदस्येतिप्राणायामप्रत्याहारौधारणामाह अभिध्यायेदित्यादिषड्भिःगुरुणाधीरेणमनसागुरुंश्रीहरिम् ४४ ॥ छ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्फुरेषुसुंदरम् ४५ रमणीयान्यंगानि यस्य ओष्ठश्च ईक्षणे च ओष्ठेक्षणं अरुणे ओष्ठेक्षणे धारयतीति तथा तम् अरुणं ओष्ठमीक्षणं च धारयतीति वा नम्रं शरणकरं यद्वा नम्रं घनं सर्वपुरुषार्थनिधिमित्यर्थः ४६ पुरुषं पुरुषलक्षणयुक्तम् ४७ कौस्तुभस्याभरणं ग्रीवायां यस्य ४८ कांचीकलापेन पर्यस्तं परिवेष्टितम् मनोनयनयोर्वर्द्धनं हर्षकरम्

प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम् सुनासं सुभ्रुवं चारुकपोलं सुरसुंदरम् ४५ तरुणं रमणीयांगमरुणोष्ठेक्षणाधरम् प्रणताश्रयणं नम्रं शरण्यं करुणार्णवम् ४६ श्रीवत्सांकं घनश्यामं पुरुषं वनमालिनम् शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ४७ किरीटिनं कुण्डलिनं केयूरवलयान्वितम् कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ४८ कांचीकलापपर्यस्तलसत्कांचननूपुरम् दर्शनीयतमं शांतं मनोनयनवर्द्धनम् ४९ पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ५० स्मयमानमभिध्यायेत्सानुरागावलोकनम् नियतेनैकभूतेन मनसा वरदर्षभम् ५१ एवं भगवतो रूपं सुभद्रं ध्यायतो मनः॥ ५५

४९ हृत्पद्मकर्णिकायां धिष्ण्यं मध्यस्थानं तदाक्रम्य समर्चितामात्मनि मनसि स्थितम् ५० ध्यानमाह स्मयमानमिति नियतेन प्रागुक्तधारणया सुस्थिरेण अत एकभूतेन एकाग्रेण धारणोक्तानि विशेषणानि ध्यानेपि द्रष्टव्यानि यद्वा यथोक्तमार्ग…

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तूर्णंशीघ्रंसंपन्नंसत् ५२ जप्योमंत्रः ५३। ५४ द्रव्याण्येवाह सलिलैरिति शस्तैर्दूर्वांकुरैः वन्यैरेवांशुकैः भूर्जत्वगादि
भिः ५५ पूजाया अधिष्ठानमाह लब्ध्वासंपाद्यद्रव्यमयींशिलादिभिर्निर्मिताम् पूजासाद्गुण्यहेतूनाह सार्द्धाभ्याम् आ
भृतात्माधृतचित्तः मितंवन्यंभुङ्क्त इतितथा ५६ यत्करिष्यतीति तदानीमवतारचातुर्याभावात् ५७ पूर्वसेविताः सेव

निर्दृत्यापरयात्तूर्णंसंपन्नंननिवर्त्तते ५२ जप्यश्चपरमोगुह्यः श्रूयतांमेनृपात्मज यं
सप्तरात्रंप्रपठन्पुमान्पश्यतिखेचरान् ५३ ॐनमोभगवतेवासुदेवाय मंत्रेणा
नेनदेवस्यकुर्याद्द्रव्यमयींबुधः सपर्यांविविधैर्द्रव्यैर्देशकालविभागवित् ५४ सलि
लैः शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः शस्तांकुरांशुकैश्चार्चेत्तुलस्याप्रिययाप्र
भुम् ५५ लब्ध्वाद्रव्यमयीमर्चांक्षित्यंब्वादिषुवार्चयेत् आभृतात्मामुनिःशांतोयतवाग्
मितवन्यभुक् ५६ स्वेच्छावतारचरितैरचिंत्यनिजमायया करिष्यत्युत्तमश्लोकस्त
द्ध्यायेद्धृदयंगतम् ५७ परिचर्याभगवतोयावत्यःपूर्वसेविताः तामंत्रहृदयेनैवप्रयुं
ज्यान्मंत्रमूर्त्तये ५८ एवंकायेनमनसावचसाचमनोगतम् ॥

ऽऽ नंकारिताः कार्यत्वेनविहि
ताइत्यर्थः मंत्रहृदयेनद्वादशाक्षरेण एवमुक्तरीत्यामनोगतंयथाभवतितथाकायादिभिर्भक्तिमत्यापरिचर्यया
परिचर्यमाणोधर्मार्थकामेषुयदभिमतंतत्॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

श्रेयोदिशतीतिद्वयोरन्वयः ५९। ६० विरक्तःसन्भजेत किमर्थंविमुक्तये ६१ हरेश्चरणाभ्यांचर्चितंमंडितम् ६२

परिचर्य्यमाणो भगवान्भक्तिमत्परिचर्यया ५९ पुंसाममायिनांसम्यग्भजतांभाववर्धनः

श्रेयोदिशत्यभिमतंयद्धर्मादिषुदेहिनाम् ६० विरक्तश्चेंद्रियरतौभक्तियोगेनभूयसा।

सा तंनिरंतरभावेनभजेताद्धाविमुक्तये ६१ इत्युक्तस्तंपरिक्रम्यप्रणम्यचनृपार्भकः

ययौमधुवनंपुण्यंहरेश्चरणचर्च्चितम् ६२ तपोवनंगतेतस्मिन्प्रविष्टोंऽतःपुरंमुनिः

अर्हितार्हणकोराज्ञासुखासीनउवाचतम् ६३ नारदउवाच राजन्किंध्यायसेदीर्घंमु

खेनपरिशुष्यता किंवानरिष्यतेकामो धर्मोवाऽर्थेनसंयुतः ६४ राजोवाच सुतोमेबा

लकोब्रह्मन्स्त्रैणेनाऽकरुणात्मना निर्वासितःपंचवर्षःसह मात्रामहान्कविः ६५॥

अप्यनाथंवनेब्रह्मन्मास्मादंत्यर्भकंवृकाः श्रांतंशयानंक्षुधितंपरिम्लानमुखांबु॥

जम् ६६ अहोमेवतदौरात्म्यंस्त्रीजितस्योपधारय योऽकम्प्रेम्णारुरुक्षंतंनाभ्यनंद॥

मसत्तमः ६७ श्रीनारदउवाच ॥ ६३ अर्हितंसत्कृत्यसमर्पितंअर्हणमर्घा

दिकंयस्मै ६४ किंवानरिष्यतेननश्यतीतिसवितर्कःप्रश्नः ६४ मात्रासहनिर्वासितइतितस्याअप्यनादृतत्वात् ६५।



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

८
भा०च० दिवेन श्रीहरिणागुप्तमात्मसात्कृत्वारक्षितंयस्ययशोजगत्प्रावृङ्क्ते व्याप्नोति ६८ विपुलयन् विस्तारयन् ६९।७० ध्रुवोम
टी० ध्रुवेन किमकरोदित्यपेक्षायामाह तत्रेत्यादिना अभिषिक्तः स्नातोयस्यांप्राप्तस्ताम् ७१ कपित्थानिबदराणिचअश्
३४

मामाशुचःस्वतनयंदेवगुप्तंविशांपते तत्प्रभावमविज्ञायप्रावृंक्तेयद्यशोजगत् ६८
सुदुष्करंकर्मकृत्वालोकपालैरपिप्रभुः एष्यत्यचिरतोराजन्यशोविपुलयंस्तव ६९
श्रीमैत्रेयउवाच इतिदेवर्षिणाप्रोक्तंविश्रुत्यजगतीपतिः राजलक्ष्मीमनादृत्यपुत्रमे
वान्वचिंतयत् ७० तत्राभिषिक्तःप्रयतस्तामुपोष्यविभावरीम् समाहितःपर्यचरदृ
ष्यादेशेनपूरुषम् ७१ त्रिरात्रांतेत्रिरात्रांतेकपित्थबदराशनः आत्मवृत्त्यनुसारेणमा
संनिन्येऽर्चयन्हरिम् ७२ द्वितीयंचतथामासंषष्ठेषष्ठेऽर्भकोदिने तृणपर्णादिभिःशी
र्णैःकृतान्नोऽभ्यर्चयद्विभुम् ७३ तृतीयंचानयन्मासंनवमेनवमेऽहनि अब्भक्षउत्त
मश्लोकमुपाधावत्समाधिना ७४ चतुर्थमपिवैमासंद्वादशेद्वादशेऽहनि वायुभक्षोजि
तश्वासोध्यायन्देवमधारयत् ७५ ॥

((नंयस्यआत्मवृत्तिःदेहस्थितिःतदनुसारेण ७२।७३ तृतीयंच
आनयन् ईषद्विनयन्नुपाधावदित्यन्वयः प्रतिमासमाहारसंकोचंतपोऽतिरेकंचकृतवानित्यर्थः ७४ । ७५ ॥६ रामः
३४

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

७६ भूतानि शब्दादीनींद्रियाणि च आशेरते यस्मिन् तत् मन आकृष्य ब्रह्म ध्यायन् ७७ धारयमाणस्य सतः तस्य तेजः ॥१९॥
सोढुं अशक्नुवंतः कंपिताः ७८ तस्यांगुष्ठेन निपीडिता आक्रांता सती मही तत्र तदा अर्द्धं ननाम समेंऽशके अर्द्धशब्दस्य न
पुंसकत्वात् अंशांशिनोरभेदाच्चैवं सामानाधिकरण्यम् इभेंद्रेणाधिष्ठिता तरी नौर्यथा पदेपदे सव्यतो दक्षिणतश्च नमति नद्

पंचमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः ध्यायन्ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः ७६।
सर्वतो मन आकृष्य हृदि भूतेंद्रियाशयम् ध्यायन्भगवतो रूपं नाद्राक्षीत्किंचनापरम्॥
७७ आधारं महदादीनां प्रधानपुरुषेश्वरम् ब्रह्म धारयमाणस्य त्रयो लोकाश्चकंपिरे ७८
यदैकपादेन स पार्थिवार्भकस्तस्थौ तदंगुष्ठनिपीडिता मही ननाम तत्रार्द्धमिभेंद्रधिष्ठिता
तरीव सव्येतरतः पदेपदे ७९ तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्य-
या धिया लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ८० देवा ऊचुः॥
नैवं विदामो भगवन्प्राणरोधं चराचरस्याखिलसत्वधाम्नः विधेहि तन्नो वृजिनाद्विमोक्षं
प्राप्ता वयं त्वां शरणं शरण्यम् ८१॥

७९ अन्यदप्याश्चर्यमाह तस्मिन्ध्रुवे विश्वं विश्वात्मकं विष्णुं आ
त्मनः सकाशात् अनन्यया धिया आत्माभेददृष्ट्या अभिध्यायति सति किं कृत्वा असुं प्राणं तत् द्वारं च निरुध्य विश्व
मात्मन्येकीकृत्य स्वप्राणनिरोधे कृते विश्वस्य प्राणनिरोधो जात इति भावः ८० एवं प्राणनिरोधं कदाचिदपि न विद्मः अखि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यतो बालात् कोऽसौ बालः कथं च तस्मात्प्राणनिरोध इत्यत आह उत्तानपादस्य पुत्रो मयि विश्वरूपे संगतात्मा ऐक्यं। प्राप्तो वर्त्तत इति ८२ ॥ इति श्रीभागवते महा० च० टीकायामष्टमोध्यायः ८ नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरान्ध्रुवः प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमितीर्यते एवं भगवद्वाक्येन गतभयाः १ स वै ध्रुवः योगविपाकेन दार्ढ्येन निश्चलया गरुडाधिरूढं पुरतः स्थितमपि यदाऽन्तर्दृष्टित्वादसौ नापश्यत्तदा भगवतैवांतःस्वरूपमाकृष्टं अंतस्तिरोहितमुपलक्ष्य व्युत्थितः सन्तदवस्थं यादृगंतःस्फुरितस्तादृशम् २ आगतसाध्वसः जातसंभ्रमः विनमय्य आननं कृत्वा संभ्रममेवाह दृग्भ्यां प्रपिबन्निव पश्यन्न वंदत आस्येन चुंबन्निवावंदन भुजाभ्यामाश्लिषन्निवावं

**श्रीभगवानुवाच मा भैष्ट बाला तपसो दुरत्ययान्निवर्त्तयिष्ये प्रतियात स्वधाम यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि संगतात्मा ८२ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कंधे ध्रुवचरितेऽष्टमोध्यायः ८ श्रीमैत्रेय उवाच तएवमुच्छिन्नभया उरुक्रमे कृतावनामाः प्रययुस्त्रिविष्टपम् सहस्रशीर्षापि ततो गरुत्मता मधोर्वनं भृत्यदिदृक्षया गतः १ स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं तडित्प्रभम् तिरोहितं सहसैवोपलक्ष्य बहिःस्थितं तदवस्थं ददर्श २ तद्दर्शनेनागतसाध्वसः क्षितावंदतांगं विनमय्य दंडवत्। दृग्भ्यां प्रपश्यन्प्रपिबन्निवार्भकश्चुंबन्निवास्येन भुजैरिवाश्लिषन् ३।**

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विवक्षंतं न तद्गुणान् वक्तुमिच्छंतम् अतद्विदं स्तुत्यादि कर्तुमजानंतं अस्य ध्रुवस्य सर्वस्य च हृद्यवस्थितत्वात् ज्ञात्वा ब्रह्ममयेन वेदात्मकेन शंखेन ४ भगवता प्रतिपादितां गिरं प्रतिपद्येति शेषः प्रतिपद्यतामिति पाठे तां वेदात्मिकां परिज्ञातः परात्मनोरीश्वरजीवयोर्निर्णयो येन सः अतएव भक्त्या भावः प्रेम यस्य असत्वरं स्थैर्येण परितः श्रुतं विख्यातं उरुश्रवः कीर्तिर्यस्य तं ध्रुवाक्षितिः स्थानं यस्येति भाविनिर्देशः ५ ईशानुग्रहसंप्राप्तवागाद्यद्भुतवृत्तिभिः द्वादशादित्य।

**स तं विवक्षंतमतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः। कृतांजलिं ब्रह्ममयेन कंबुना पस्पर्श बालं कृपया कपोले ४ स वै तदैव प्रतिपादितां गिरं दैवीं परिज्ञातपरात्मनिर्णयः। तं भक्तिभावोऽभ्यगृणादसत्वरं परिश्रुतोरुश्रवसं ध्रुवक्षितिः ५ ध्रुव उवाच योंऽतः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना अन्यांश्च हस्तचरणश्रवणत्वगादीन्प्राणान्नमो भगवते पुरुषाय तुभ्यम् ६ एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम्॥**

६ संकाशैः श्लोकैरस्तौद्धरिं ध्रुवः यो मे प्रसुप्तां लीनां वाचं अन्यांश्च प्राणानिंद्रियाणि स्वधाम्ना चिच्छक्त्या संजीवयति यतः अखिलाश्चक्षुरादिज्ञानक्रियाशक्तीर्धारयतीति तथा पुरुषाय अंतर्यामिणे ६ ननु वागादींद्रियशक्तिधरा वन्ह्यादयः प्रसिद्धा नाहमित्यत आह एक इति अनुविश्य पुरुषोंऽतर्यामी त्वमेक एव तया मायया असत्सु गुणेष्विन्द्रियादिषु स्थितः सन् तत्तद्देवरूपो नानेव भासि॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ननुतद्व्यतिरेकेणज्ञानक्रियाशक्तिधरःकश्चिदस्तीत्यर्थः ७ अपिचकिंवक्तव्यंवन्यादयोज्ञानादिशक्तिधरानभ
वंतीतियस्माद्ब्रह्मणोऽपिज्ञानंत्वदधीनमेवेत्याह त्वद्दत्तयावयुनयाज्ञानेनभवंतंशरणप्रपन्नोब्रह्मादृदंविश्वंअ
पश्यत् कथंसुप्तःपुरुषःप्रबुद्धःसन् यथापश्यतितद्वत् अतःआपवर्ग्यामुक्तास्तेपामपिशरणंकृतविदांसर्वेन्द्रिय
जीवनेनत्वत्कृतमुपकारंजानतांकथंविस्मयेत एवंभूतंत्वामभजंतःकृतघ्नाइत्यर्थः ८ येचमादृशाःकामाद्यर्थंभजं

त्वष्ठाऽनुविश्यपुरुषस्तदसद्गुणेषुनानेवदारुषुविभावसुवद्विभासि ७ त्वद्दत्तयाव
युनयेदमचष्टविश्वंसुप्तप्रबुद्धइवनाथभवत्प्रपन्नः तस्यापवर्ग्यशरणंतवपादमू
लंविस्मर्यतेकृतविदाकथमार्त्तबंधो ८ नूनंविमुष्टमतयस्तवमाययातेयेत्वांभवा
प्ययविमोक्षणमन्यहेतोःअर्चंतिकल्पकतरुंकुणयोपभोग्यमिच्छंतियत्स्पर्शजंन
रकेऽपिनृणाम् ९ यानिर्वृतिस्तनुभृतांतवपादपद्मध्यानाद्भवज्जनकथाश्रवणेन
वास्यात् साब्रह्मणिस्वमहिमन्यपिनाथमाभूत्किंत्वंतकासिलुलितात्पततांविमानात् १०

तितेऽतिमूढाइत्याह नूनमितिभवाप्ययोजन्ममरणेतद्विमोक्षहेतुंत्वामन्यहेतोःकामाद्यर्थंभजंतितेनूनंविमुष्ट
मतयःवंचितचित्ताःयतस्तेकल्पतरुंत्वामर्चंतिततःकुणपतुल्येनदेहेनोपभोग्यंसुखमिच्छंति नचेच्छायोग्यं
तदित्याह यत्स्पर्शजंविषयसंबंधजन्यंसुखंतन्नरकेऽपिभवति ९ ननुस्वर्गादिसुखंसकामैःप्राप्यतेनिष्काम
भजनेतन्नस्यादित्यतआह येति स्वमहिमनिनिजानंदरूपेऽपिमाभूत् नभवतीत्यर्थःअंतकस्यासिनाकालेनलुलि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अतस्तेकथाश्रवणायसत्संगतिरेहीत्याह भक्तिंत्वयिप्रवहतांसानत्येनकुर्वताम् ननुमोक्षंकिंनयाचसे अतआ
ह येनमहत्प्रसंगेनअंजसाअयत्नतएवउरूणिव्यसनानियस्मिन्तंनेष्येपारंगमिष्यामि भवद्गुणकथैवामृतंतत्
स्यपानेनमत्तःसन् ११ कथामृतपानस्यमादकत्वमाह तेअतितरांप्रियमपिमर्त्यदेहंनस्मरंतिनानुसंदधतेयेचस्त
नाद्यः अदःमर्त्यमनुसंबद्धाःतानपिकेतेनस्मरंति येकृतप्रसंगाःकेषुभवदीयपदारविंदसौगंध्येनलुब्धंहृदयंये

भक्तिंमुहुःप्रवहतांत्वयि मेप्रसंगोभूयादनंतमहतामम्लाशयानाम् येनांजसोऽ
ल्बणमुरुव्यसनंभवाब्धिंनेष्येभवद्गुणकथाऽमृतपानमत्तः ११ तेनस्मरंत्यतित
रांप्रियमीशमर्त्यंयेचान्वदःसुतसुहृद्गृहवित्तदाराः येत्वब्जनाभभवदीयपदारविं
दसौगन्ध्यलुब्धहृदयेषुकृतप्रसंगाः १२ तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादि
भिःपरिचितंसदसद्विशेषम् रूपंस्थविष्ठभजतेमहदाद्यनेकन्नातःपरंपरमवे
द्मिनयत्रवादः १३॥ १३ ॥ ९ ॥

एषांतेषुतुशब्देनान्येषांकेवलयोगादिनिष्ठानांदेहाद्यभि
मानान्निवृत्तिंदर्शयति १२ नन्वेवंविद्वानपित्वद्भिमित्यभिमानंवहसिअतआह तिर्य्यगितितिर्य्यङ्नगादिभिः प
रिचितंव्याप्तंसतोऽसतश्चविशेषायस्यमहदादीन्यनेकानिकारणानियस्यहेपरमअजतेइदंस्थविष्ठंविराड्रूपंके
वलंवेद्मि यत्रवादःशब्दव्यापारोनास्तितद्ब्रह्मस्वरूपंचनवेद्मिअतोऽभिमानोननिवर्त्ततेइत्यर्थः १३ ॥ १३ ॥ ९ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भा॰ च॰ टी॰ ३७

तदेवभगवदनुकंपयातद्रूपद्वयंज्ञानेश्वररूपमनुवर्णयन्नमस्करोति कल्पान्तइति एतत्त्रैलोक्यंयःपुमान्शेते स्वस्मिन्नेवदक् नबहिर्यस्ययोगनिद्रारूढत्वात् अनंतसखःशेषसहायः तदंकेशेषोत्संगेयस्यनाभिरेवसिंधुःसमुद्रः तस्मिन्रोहतीतितथातस्मिन्कांचनलोकपद्मस्यगर्भेकर्णिकायांद्युमान्तेजस्वीब्रह्माभवतितंत्रणतोऽस्मीत्यर्थः १४। ननुममापिस्वापाद्यवस्थावत्त्वेकोजीवाद्विशेषइत्यतआह त्वंतुव्यतिरिक्तःजीवविलक्षणःआस्सेतिष्ठसि वैलक्षण्यमे

कल्पांतएतदखिलंजठरेणगृह्णन्शेतेपुमान्स्वदृगनंतसखस्तदंके यन्नाभिसिंधुरुहकांचनलोकपद्मगर्भेद्युमान्भगवते प्रणतोऽस्मितस्मै १४ त्वंनित्यमुक्तपरिशुद्धविबुद्धआत्माकूटस्थआदिपुरुषोभगवांस्त्र्यधीशः यद्बुद्ध्यवस्थितिमखंडितया। स्वदृष्ट्याद्रष्टास्थिनावधिमखोव्यतिरिक्तआस्से १५ यस्मिन्विरुद्धगतयोह्यनिशंपतंति विद्यादयोविविधशक्तयआनुपूर्व्यात् तद्ब्रह्मविश्वभवमेकमनंतमाद्यमानंदमात्रमविकारमहंप्रपद्ये १६॥ ९वाह त्वंतुनित्यमुक्तः जीवस्तुत्वत्प्रसादान्मुच्यते त्वंपरिशुद्धःसतुमलिनः त्वंतुविशुद्धःसत्वज्ञःत्वमात्मासतुजडः त्वंकूटस्थःसतुविकारी त्वमादिपुरुषःसत्वादिमान् त्वंतुभगवान् सतुभगहीनः त्वंत्रयाणांगुणानामधीशःसतुपरतंत्रः कुतएतद्वैलक्षण्यंयद्यतः बुद्ध्यवस्थितिंबुद्धेस्तानामवस्थांअखंडितयास्वदृष्ट्याचिच्छक्त्याद्रष्टापश्यतिद्रष्टेतित्वन्प्रत्ययांतः अतोबुद्ध्यवस्थितिमित्यत्रषष्ठ्यभावः तथाभूतएवत्वंस्थितोपालनेअधिमखःयज्ञाधिष्ठाताश्रीविष्णुः १५ तमेवब्रह्मरूपेणज्ञात्वानमस्करोतियस्मिन्निति पतन्तिअकस्माद्भवंति विश्वस्यभ

वबोधस्मात्एकमखंडमलानंदं॥ ३६॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सकामभजनादपिमोक्षमाशासानआह हेभगवन्पुरुषार्थः परमानंदः सएवमूर्तिर्यस्यतवपादपद्मंआशिषोराज्या दिःसकाशात्सत्याआशीःपरमार्थफलंहिनिश्चितंकस्यतथातेनप्रकारेणत्वमेवपुरुषार्थइत्येवंनिष्कामतयाअन्वनु भजतः यद्यप्येवंतथापिहेआर्यस्वामिन्दीनान्सकामानप्यस्मान्भगवान्परिपातिसंसारभयाद्रक्षत्येवयतःअनुग्र हहिताचरणेकातरःपरवशःयथानवप्रसूतावाश्राधेनुर्वत्संक्षीरंपाययतिवृकादिभ्योरक्षतिचतद्वत्१७।१८व्यव॰

सत्याशिषोहिभगवंस्तवपादपद्ममाशीस्तथाऽनुभजतःपुरुषार्थमूर्तेः अप्येवमार्यभ। गवान्परिपातिदीनान्वाश्रेववत्सकमनुग्रहकातरोऽस्मान् १७ श्रीमैत्रेयउवाच॥ अ थाभिष्टुतएवंवैसत्संकल्पेनधीमता भृत्यानुरक्तोभगवान्प्रतिनंद्येदमब्रवीत् १८॥ श्रीभगवानुवाच वेदाहंतेव्यवसितंहृदिराजन्यबालक यत्तयच्छामिभद्रंतेदुरापम पिसुव्रत १९ नान्यैरधिष्ठितंभद्रयद्भ्राजिष्णुध्रुवक्षिति यत्रग्रहर्क्षताराणांज्योतिषांच क्रमाहितम् २० मेढ्यांगोचक्रवत्स्थास्नुपरस्तात्कल्पवासिनाम् धर्मोग्निःकश्यपःशु॰ क्रोमुनयोयेवनौकसः चरंतिदक्षिणीकृत्यभ्रमंतोयत्सतारकाः २१॥ व्यवसितंसंकल्पितं१९न

त्वयच्छामीत्युक्तंकिंतदित्यपेक्षायामाह नान्यैरितिसार्द्धाभ्यांहेभद्रध्रुवाक्षितिर्निवासोयस्मिन्आहितमर्पितम् २०धा न्याक्रमणायभ्राम्यमाणानांपशूनांबंधनस्तंभोमेढीतस्यांबलीवर्दसमूहवत् अवांतरकल्पवासिनांपरस्तादपिस्थास्नुलो॰

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एतच्च राज्यानंतरं भविष्यतीत्याह प्रस्थित इति तुभ्यं पृथ्वीं दत्वा वनं प्रस्थिते भावेक्तः वनं प्रति दीर्घगमने कृते सति रक्षिता रक्षिष्यसि २२ त्वया असंकल्पितमपि मद्भक्तस्य तव द्रोहादेवं भविष्यतीत्याह त्वद्भ्रातरीति सा रुरुचिः दावाग्निं प्रवेक्ष्यति २३ किंच इष्ट्वा मां यज्ञोत्हृदयं प्रियामूर्तिर्यस्य तम् २४ यतः स्थानात् २५ अतिदिश्य दत्वा २६ संकल्पजं मनोरथं पाद

प्रस्थिते तु वनं पित्रा दत्वा गां धर्वसंश्रयः षट्त्रिंशद्वर्षसाहस्रं रक्षिता मंडलं भुवः २२ त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः अन्वेषंती वनं याता दावाग्निं सा प्रवेक्ष्यति॥ २३ इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः भुक्त्वा चेहाशिषः सत्या अंते मां संस्मरिष्यसि २४ ततो गंतासि मत्स्थानं सर्वलोकनमस्कृतम् उपरिष्टादृषिभ्यस्त्वं यतो नावर्त्तते गतः २५ मैत्रेय उवाच इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः २६ सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम् प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम् २७ विदुर उवाच सुदुर्लभं यत्परमं पदं हरेर्मायाविनस्तच्चरणार्चनार्जितम् लब्ध्वाप्यसिद्धार्थमिवैकजन्मना कथं स्वमात्मानममन्य

सेवयाप्राप्तिं संकल्पस्य निर्वाणं समाप्तिर्यस्मात् २७ मायाविनः सकामस्य यत्सुदुर्लभं हरेः पदं ॥ तार्थवित् २८ तदेकेनैव जन्मना लब्ध्वाऽपि स्वमात्मानं मनः असिद्धार्थं अप्राप्तमनोरथमिव कथममन्यत पुरुषार्थविदपि २८॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२९ तापमेवाह समाधिनेति सार्द्धैः पद्भिः नैके अनेके भवा यस्मिन् बहुजन्मभ्यस्तेनेत्यर्थः प्रणामस्तुत्यादिसमये गरु-
डाधिरूढस्य हरेः पादच्छायायां स्थितमात्मानं स्मरन्नाह छायामुपेत्येति पृथग्भ्रांतिः भेददृष्टिः सन् हा कष्टमिति भावः ३०
अनात्म्य आत्मशून्यत्वं अज्ञत्वं भवच्छेत्तुः यदंतवत् तद्याचे याचितवानस्मि ३१ अज्ञत्वे कारणं संभावयति मतिरिति।

मैत्रेय उवाच मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान्स्मरन्। नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान् २९ ध्रुव उवाच समाधिना नैकभवेन यत्पदं विदुः सनंदादय ऊर्द्ध्वरेतसः। मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथङ्मतिः ३० अहो बत ममानात्म्यं मंदभाग्यस्य पश्यत भवच्छिदः पादमूलं गत्वा याचे यदंतवत् ३१ मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ३२ दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ३३ मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि प्रसाद्य जगदात्मानं तपसा दुःप्रसादनम्। भगवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ३४॥ पतद्भिर्मदपेक्षया अधःप्राप्नुवद्भिः अत एवासहनशीलैः नाधुनाऽप्य-
वमानं नेदृत्यादि सत्यमपि नारदस्य वचो येन गृहीतवानस्मि तस्य मे मतिर्विदूषिता ३२ किंच दैवीमिति प्रसुप्तः स्वप्ना-
निव पश्यन् द्वितीये असत्यपि भ्रातृव्यः शत्रुरिति दृष्ट्या हृद्रुजा हृदयशोकेन तप्ये तापमनुभवामि ३३ किंच मयाप्रसाद्य

एतदेवसदृष्टान्तमाह स्वाराज्यंनिजानंदंप्रयच्छतःसकाशाद्भिमानःक्षीणपुण्येनमयाभिक्षितःयाचितःक्षीणेन॰
पुण्येनेतिवादृष्टान्तएवसंबंधः यथाअधनःईश्वराच्चक्रवर्त्तिनःफलीकारान्सतुषतंडुलकणान्याचेनेतद्वत् ३५
एवंनिस्पृहत्वंतस्ययुक्तमित्याह तस्यदास्यंविनाअन्यमर्थमात्मनोनैववांछंति यदृच्छयैवलब्धेनमनसःसमृद्धिर्येषांते

स्वाराज्यंयच्छतोमौढ्यान्मानोमेभिक्षितोवत ईश्वरात्क्षीणपुण्येनफलीकारानिवा
ऽधनः ३५ मैत्रेयउवाच नवैमुकुंदस्यपदारविंदयोरजोजुषस्तातभवादृशाजनाः॥
वांछंतिनद्दास्यमृतेऽर्थमात्मनोयदृच्छयालब्धमनःसमृद्धयः ३६ आकर्ण्यात्मजमा
यांतंसंपरेत्ययथागतम् राजानश्रद्दधेभद्रमभद्रस्यकुतोमम ३७ श्रद्धायवाक्यंदेवर्षे
र्हर्षवेगेनधर्षितः वार्त्ताहर्त्तुरभिप्रीतोहारंप्रादान्महाधनम् ३८ सदश्वरथमारुह्य।
कार्त्तस्वरपरिष्कृतम् ब्राह्मणैःकुलवृद्धैश्चपर्यस्तोऽमात्यबंधुभिः ३९ शंखदुंदुभिना
देनब्रह्मघोषेणवेणुभिः निश्चक्रामपुरात्तूर्णमात्मजाभीक्षणोत्सुकः ४० सुनीतिःसुरु
चिश्चास्यमहिष्यौरुक्मभूषिते आरुह्यशिविकांसार्द्धमुत्तमेनाभिजग्मतुः ४१॥

३६ प्रस्तु
तमाह आकर्ण्येतिसंपरेत्यमृत्वाआगतमाकर्ण्ययथातथानश्रद्दधेविश्वासंनचकार अभद्रस्यममभद्रंकुतइतिम
त्वा ३७ एष्यत्यचिरतद्भितिदेवर्षेर्वाक्यंश्रद्धाय ३८ ब्राह्मणादिभिःपर्यस्तःपरिवृतः ३९।४० अस्यराज्ञोमहिष्यौमध्येउत्तमं
स्त्रियौ शिविकामिवशिविकांविमानमारुह्य ४१॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

उपवनस्याभ्याशेसमीपे ४२ विष्वक्सेनांघ्रिसंस्पर्शेनहतमशेषमघंबंधनंचयस्य ४३ जातःउद्दामोमहान्मनोरथोय
स्य ४४ अभिमंत्रितःपितुराशीर्भिःसहतेनकृतसंभाषणः ४५ । ४६ सुरुच्याःप्रीतिर्नासंभावितेत्याह यस्येतिनमंतिअ

तंदृष्ट्वोपवनाभ्यास आयांतंतरसारथात् अवरुह्यन्नृपस्तूर्णमासाद्यप्रेमविह्वलः ४२
परिरेभेऽगजंदोर्भ्यांदीर्घोत्कंठमनाःश्वसन् विष्वक्सेनांघ्रिसंस्पर्शहताशेषाऽघबंध
नम् ४३ अथाजिघ्रन्मुहुर्मूर्ध्निशीतैर्नयनवारिभिःस्नापयामासतनयंजातोद्दाममनो
रथः ४४ अभिवंद्यपितुःपादावाशीर्भिश्चाभिमंत्रितः ननाममातरौशीर्ष्णासत्कृतः
सज्जनाग्रणीः ४५ सुरुचिस्तंसमुत्थाप्यपादावनतमर्भकम् परिष्वज्याहजीवेतिवा
ष्पगद्गदयागिरा ४६ यस्यप्रसन्नोभगवान्गुणैर्मैत्र्यादिभिर्हरिः तस्मैनमंतिभूतानिनि
म्नमापइवस्वयम् ४७ उत्तमश्चध्रुवश्चोभावन्योन्यंप्रेमविह्वलौ अंगसंगादुत्पुलका
वस्त्रौघंमुहुरूहतुः ४८ सुनीतिरस्यजननीप्राणेभ्योपिप्रियंसुतम् उपगुह्यजहावाधिं
तदंगस्पर्शनिर्वृता ४९ पयःस्तनाभ्यांसुस्रावनेत्रजैःसलिलैःशिवैः तदाऽभिषिच्यमाना
भ्यांवीरवीरसुवोमुहुः ५० ॥ ४६ नुसरंति आपोयथास्वयमेवनिम्नंदेशमवंतरंति ४७ ऊहतुःदधतुः ४८
। ४९ हेवीरवीरसुवोध्रुवमातुःअभिषिच्यमानाभ्यांस्तनाभ्यांपयस्तदासुस्राव ५० ॥ ५० ॥ छ ॥ ९ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

चिरंनष्टः दर्शनमप्राप्तः रक्षिता रक्षिष्यति ५१। ५२एवमितिव्यवहितंपित्राद्युपलालनंपरामृश्यते ५३पुरंवर्णयति त त्रतत्रेति चतुर्भिःसवृंदैःफलमञ्जरीयुक्तैःपूगानांपोतैर्बालवृक्षैःत द्विधैःसवृन्दैरुपस्कृतंप्रतिद्वारमित्युत्तरेणान्वयः।

**तांशसंस्कृतरराज्ञी दिष्ट्यातेपुत्रआत्मिहा प्रतिलब्धश्चिरंनष्टोरक्षितामंडलंभुवः ५१॥ अभ्यर्चितस्त्वयानूनंभगवान्प्रणतार्तिहा यदनुध्यायिनोवीरामृत्युंजिग्युःसुदुर्जय म् ५२ लाल्यमानंजनैरेवंध्रुवंसभ्रातरंनृपः आरोप्यकरिणींहृष्टःस्तूयमानोऽविशत्पु रम् ५३ तत्रतत्रोपसंक्लिप्तैर्लसन्मकरतोरणैः सवृंदैःकदलीस्तंभैःपूगपोतैश्चतद्वि धैः ५४ चूतपल्लववासःस्रङ्मुक्तादामविलंबिभिः उपस्कृतंप्रतिद्वारमपांकुंभैःसदीप कैः ५५ प्राकारैर्गोपुरागारैःशातकुंभपरिच्छदैः सर्वतोऽलंकृतंश्रीमद्विमानशिखरद्युभि भिः ५६ मृष्टचत्वररथ्याऽट्टमार्गचंदनचर्चितम् लाजाऽक्षतैःपुष्पफलैस्तंडुलैर्बलिभिर्यु तम् ५७ ध्रुवायपथिदृष्टायतत्रतत्रपुरस्त्रियः सिद्धार्थाक्षतदध्यंबुदूर्वापुष्पफलानिच॥ ५८ उपजह्रुःप्रयुंजानावात्सल्यादाशिषःसती:॥**

५४ चूतपल्लवाश्चवासांसिचस्रजश्चमुक्तादामानि चतेषांविशिष्टंलंबनमस्तियेषुकुंभेषु ५५ गोपुरैरगारैश्चशातकुंभाःपरिच्छदाःपरिकरायेषुविमानानामिवशिखरैर्द्युति र्येषाम् ५६ चत्वरमंगणंरथ्यामहामार्गः अट्टउच्चस्योपरिनिर्मिताभूमिकामार्गोऽवांतरःमृष्टाःसमार्जिताश्चत्वारादयोयस्मि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यत्रभवनोत्तमे ६१।६२।६३ कुसुतकुमुदं पद्मादिमत्तोवाप्यः ६४।६५ ऊढवयसंप्राप्तयोवनम् अनुरक्ताःप्रजायस्मि

शृण्वन् तद्वल्गुगीतानि प्रायविशद्भवनंपितुः ५९ महामणिव्रातमयेसतस्मिन्भवनोत्तमे

लालितोनितरांपित्रान्यवसद्दिविदेववत् ६० पयःफेननिभाःशय्यादांतरुक्मपरिच्छ

दाः आसनानिमहार्हाणियत्ररौक्माउपस्कराः ६१ यत्रस्फटिककुड्येषुमहामारकतेषु

च मणिप्रदीपाआभांतिललनारत्नसंयुताः ६२ उद्यानानिचरम्याणिविचित्रैरमरद्रुमैः

कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ६३ वाप्योवैडूर्य्यसोपानाःपद्मोत्पलकुमुद्वतीः हं

सकारंडवकुलैर्जुष्टाश्चक्राह्वसारसैः ६४ उत्तानपादोराजर्षिःप्रभावंतनयस्यतम् श्रु

त्वादृष्ट्वाऽद्भुततमंप्रपेदेविस्मयंपरम् ६५ वीक्ष्योढवयसंतंचप्रकृतीनाञ्चसंमतम् अ

नुरक्तप्रजंराजाध्रुवंचक्रेभुवःपतिम् ६६ आत्मानंचप्रवयसमाकलय्यविशांपतिः॥

वनंविरक्तःप्रातिष्ठद्विमृशन्नात्मनोगतिम् ६७ ॥इतिश्रीभा०चतु०नवमोऽध्यायः९॥

श्रीमैत्रेयउवाच प्रजापतेर्दुहितरंशिशुमारस्यवैध्रुवः उपयेमेभ्रमिंनामतत्सुतौकल्प

वत्सरौ १ इलायामपिभार्यायांवायोःपुत्र्यांमहाबलः पुत्रमुत्कलनामानंयोषिद्रत्नमजीज

नत् २

न् ६६ प्रवयसंवृद्धम् ६७ ॥इतिचतुर्थेटीकायांनवमः९॥दशमेभ्रातृहंतॄणांयक्षाणामकरोद्वधम् एकएवालकांगत्वा

तस्यविक्रमसउत्कलोत्तरः॥१ वीक्षितांतरलक्ष्मिवानिमनोहरकी

मात्रक्षितिका २॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यक्षेण भ्राता हिमवति हतः आजाविति पाठे युद्धे अस्य गतिं गता मृतेत्यर्थः ३ कोपामर्षशुचा द्वंद्वैकत्वं तेनार्पितो व्याप्तः जैत्रं जयहेतुं पुण्यजनालयं अलकाम् ४ रुद्रानुचरा भूतादयः ५ दध्मौ वादितवान् येन शंखवादनेन हे क्षत्तः उपदेव्यो।

उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा हतः पुण्यजनेनाद्रौ तन्मातास्य गतिं गता ३ ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः जैत्रं स्यंदनमास्थाय गतः पुण्यजनालयम्। ४ गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसंकुलाम् ५ दध्मौ शंखं बृहद्बाहुः खं दिशश्चानुनादयन् येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम् ६ ततो निष्क्रम्य बलिन उपदेवमहाभटाः असहंतस्तन्निनादमभिपेतुरुदायुधाः ७ स तानापततो वीर उग्रधन्वा महारथः एकैकं युगपत्सर्वानहन्बाणैस्त्रिभिस्त्रिभिः ८ ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि मत्वा निरस्तमात्मानमाशंसन्कर्म तस्य तत् ९ तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः॥ ॐ ॥

६ यक्षस्त्रियः ७।८ एकैकं त्रिभिस्त्रिभिः इत्येवं सर्वान् त्रयोदशायुतानि यक्षान् युगपदहन् जघान ८। ९ निरस्तं पराजितं तस्य ध्रुवस्य तत्कर्म आशंसन् तुष्टुवुः ९ तेऽपि तत्कर्मासहमाना अमुमविध्यन् द्विगुणं यथा भवति॥ ॐ ॥ ॐ ॥ ॐ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

॥ १९ प्रायःबाहुल्येन विरूक्णाः संछिन्नाः अवयवा येषाम् २० आततायिनं शस्त्रपाणिम् २१ इति ब्रुवन्नित्यत्रापि न मायिनामित्यादेरनुषङ्गः चित्ररथो ध्रुवः यतः यत्नवान् प्रतियोगः पुनरुद्योगः तस्माच्छंकितः नभस्वतः वायोर्हेतोः

हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः आस्तृतास्तारणभुवो रेजुर्वीरमनोहराः १९ हता वशिष्टा इतरे रणाजिराद्रक्षोगणाः क्षत्रियवर्य्यसायकैः प्रायो विरूक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव २० अपश्यमानः स तदाततायिनं महामृधे कंचन मानवोत्तमः पुरीं दिदृक्षन्नपि नाविशद् द्विषां न मायिनां वेद चिकीर्षितं जनः २१ इति ब्रुवंश्चित्ररथः स्वसारथिं यत्तः परेषां प्रतियोगशंकितः शुश्राव शब्दं जलधेरिवेरितं नभस्वतो दिक्षु रजोऽन्वदृश्यत २२ क्षणेनाच्छादितं व्योम घनानीकेन सर्वतः विस्फुरत्तडिता दिक्षु त्रासयत्स्तनयित्नुना २३ ववृषू रुधिरौघासृक्पूयविण्मूत्रमेदसः। निपेतुर्गगनादस्य कबंधान्यग्रतोऽनघ २४ ततः खेऽदृश्यत गिरिर्निपेतुः सर्वतोदिशम् गदापरिघनिस्त्रिंशमुशलाः साश्मवर्षिणः २५॥ २५॥ ॥ २२ विस्फुरंत्यस्तडितो यस्मिन् तेन त्रासयंतः स्तनयित्नवोऽशनयो यस्मिन् २३ ववृषुः निपेतुरित्यर्थः नसृजतिशारीरमित्यसृगिह श्लेष्मादिमेदसः पुंस्त्वमार्षमेदांसि अस्याग्रतो निपेतुः २४ साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वंतः २५॥ २५॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एवंषड्भिः प्रतिकर्त्तुमिच्छंतः १० चित्रवाजैः विचित्रपक्षैः ११। १२ धारासंपातेन छन्नो गिरिरिवनैवादृश्यत १३ सूर्यतुल्यः
१४ यातुधानेषु राक्षसेषु जयकाशिषु जितंजितमितिजयप्रकाशकेषु सत्सु १५ व्यधमत्संचूर्णयामास १६ वर्माणि।

शरैरविध्यन्युगपद्द्विगुणंप्रचिकीर्षवः १० ततःपरिघनिस्त्रिंशैःप्रासशूलपरश्वधैः।
शक्त्यृष्टिभिर्भुशुंडीभिश्चित्रवाजैःशरैरपि ११ अभ्यवर्षन्प्रकुपिताःसरथंसहसारथि
म् इच्छंतस्तत्प्रतीकर्त्तुमयुतानित्रयोदश १२ औत्तानपादिःसतदाशस्त्रवर्षेणभूरि
णा नउपादृश्यतच्छन्न आसारेणयथागिरिः १३ हाहाकारस्तदैवासीत्सिद्धानांदिविप
श्यताम् हतोऽयंमानवःसूर्योमग्नःपुण्यजनार्णवे १४ नदत्सुयातुधानेषुजयकाशि
ष्वथोमृधे उदतिष्ठद्रथस्तस्यनीहारादिविभास्करः १५ धनुर्विस्फूर्जयन्दिव्यंद्विषतां
खेदमुद्वहन् अस्त्रौघंव्यधमद्बाणैर्घनानीकमिवानिलः १६ तस्यतेचापनिर्मुक्ताभि
त्त्वावर्माणिरक्षसाम् कायानाविविशुस्तिग्मागिरीनशनयोयथा १७ भल्लैःसंछिन्नमा
नानांशिरोभिश्चारुकुंडलैः ऊरुभिर्हेमतालाभैर्दोर्भिर्बलयवल्गुभिः १८॥ १८ ॥

कवचानि १७ शिरःप्रमुखैरास्तताः प्रकीर्णारेजुरितिद्वयोरन्वयः १८ ॥ १८ ॥ ६ ॥ श्रीरामः।

अशनिवन्निश्वासोयेषाम् २६। २७ त्रासनानिभयङ्कराणितिग्मान्क्रूरागतिःप्रवृत्तिर्येषांअसुरराक्षसादिशब्दैर दूरान्तरत्वेनयक्षाएवोच्यन्ते २८ तस्यशंकल्याणंआशंसन्प्रार्थितवन्तः २९ तवविपक्षान्शत्रून्नाशयतुअद्धा

अहयोऽशनिनिश्वासावमंतोऽग्निंरुषाऽक्षिभिः अभ्यधावन्गजामत्ताःसिंहाव्याघ्राश्चयूथशः २६ समुद्रऊर्मिभिर्भीमःप्लावयन्सर्वतोभुवम् आससादमहाह्रादःकल्पांतइवभीषणः २७ एवंविधान्यनेकानित्रासनान्यमनस्विनाम् ससृजुस्तिग्मगतयआसुर्यामाययासुराः २८ ध्रुवेप्रयुक्तामसुरैस्तांमायामतिदुस्तराम् निशाम्यतस्यमुनयःशमाशंसन्समागताः २९ मुनयऊचुः औत्तानपादेभगवांस्तवशार्ङ्गधन्वादेवःक्षिणोत्ववनतार्तिहरोविपक्षान् यन्नामधेयमभिधायनिशम्यचाद्धालोकोऽञ्जसातरतिदुस्तरमंगमृत्युम् ३० ॥ ॥इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धेदशमोऽध्यायः १० ॥ ॥मैत्रेयउवाच निशम्यगदतामेवमृषीणांधनुषिध्रुवः संदधेऽस्त्रमुपस्पृश्ययन्नारायणनिर्मितम् १॥ १ ॥

१ साक्षात् अंजसासुखेनैवमृत्युंतरति ३० ॥ ॥इतिचतुर्थेटीकायांदशमः १० ॥ ॥एकादशेतुयक्षाणांक्षयंदृष्ट्वामनुःस्वयम् आगत्यवारयामासध्रुवंतत्त्वोपदेशतः १ एवंगदतांवचनमुपदेशमिवनिशम्यउपस्पृश्यआचम्ययन्नारायणनिर्मितंनारायणास्त्रंसन्दधे १॥ १ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

क्लेशारागादयोयथा २ किंचतस्यार्षमस्त्रंऋषेर्नारायणादुद्भूतमस्त्रंप्रयुंजतःसंदधतःसतःस्वर्णमयाःपुंखाः मूलभागायेषांकलहंसानांवासांसिपक्षायेषांतेशराविनिःसृता इतिद्रष्टव्यंउपरिष्टाच्छिलीमुखग्रहणात् ३ अ

संधीयमानएतस्मिन्मायागुह्यकनिर्मिताः क्षिप्रंविनेशुर्विदुरक्लेशाज्ञानोदयेयथा॥ २तस्यार्षमस्त्रंधनुषिप्रयुंजतःसुवर्णपुंखाःकलहंसवाससः विनिःसृताआविविशुर्द्विषद्बलंयथावनंभीमरवाःशिखंडिनः ३तैस्तिग्मधारैःप्रधनेशिलीमुखैरितस्ततःपुण्यजनाउपद्रुताः तमभ्यधावन्कुपिताउदायुधाःसुपर्णमुन्नद्धफणाइवाहयः ४सतान्पृषत्कैरभिधावतोमृधेनिकृत्तबाहूरुशिरोधरोदरान् निनायलोकंपरमर्कमण्डलंव्रजंतिनिर्भिद्ययमूर्ध्वरेतसः ५तान्हन्यमानानभिवीक्ष्यगुह्यकाननागसश्चित्ररथेनभूरिशः औत्तानपादिंकृपयापितामहोमनुर्जगादोपगतःसहर्षिभिः ६ मनुरुवाच अलंवत्सातिरोषेणतमोद्वारेणपाप्मना येनपुण्यजनानेतानवधीस्त्वमनागसः ७ ॥ ॐ ॥

उद्धनेयुद्धेउन्नद्धाउच्छ्रितःफणायेषांतेसर्पाः ४ पृषत्कैर्बाणैर्निकृत्ताबाहूरादयोयेषांतान्परंलोकंनिनायकथंभूतंऊर्ध्वरेतसःसन्यासिनोऽर्कमण्डलंनिर्भिद्ययंव्रजंतितम् ५॥ तान् अनागसोनिरपराधान् ६ तमसोनरकस्यद्वारेणयेनरोषेण ७ ॥ ७ ॥ ॐ ॥ ॐ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

।८ ननुमद्भ्रातृहंतारः कथमकृतैनसोऽत आह नन्विति ९ सत्यप्यपराधेचनवैतदुचितंनभवतीत्याह नायमिति पराग्गृह्यपराङ्भूतंदेहमात्मानंगृहीत्वापशवोयथादेहाभिमाना अन्योऽन्यंघ्नंतितथाभूतानांवैशसंहिंसेतियत्। १० त्वंचबाल्येसाधुःसन्निदानींकथमन्यथाकृतवानित्याह सर्वभूतात्मभावेनेतिद्वाभ्याम् ११ अनुध्यातःहरेःहृ

नास्मत्कुलोचितंतात कर्मैतत्सद्विगर्हितम् वधोयदुपदेवानामारब्धस्तेऽकृतैनसाम्
८ नन्वेकस्यापराधेनप्रसंगाद्बहवोहताः भ्रातुर्वधाभितप्तेनत्वयांऽगभ्रातृवत्सल।
९ नायंमार्गोहिसाधूनांहृषीकेशानुवर्तिनाम् यदात्मानंपराग्गृह्यपशुवद्भूतवैशस
म् १० सर्वभूतात्मभावेनभूतावासंहरिंभवान् आराध्यापदुराराध्यंविष्णोस्तत्परमं
पदम् ११ सत्वंहरेरनुध्यानस्तत्पुंसामपिसंमतः कथंत्ववद्यंकृतवाननुशिक्षन्सतां
व्रतम् १२ तितिक्षयाकरुणयामैत्र्याचाखिलजंतुषु समत्वेनचसर्वात्माभगवान्सं
प्रसीदति १३ संप्रसन्नेभगवतिपुरुषःप्राकृतैर्गुणैः विमुक्तोजीवनिर्मुक्तोब्रह्मनिर्वा
णमृच्छति १४

दिस्थितः ज्ञातोवातत्पुंसांहरिदासानामपिसाधुत्वेनसंमतः १२ सतांव्रतमेवाह महत्स्विति तितिक्षयानीचेषुकरुणयासमेषुमैत्र्याअखिलेषु जंतुषुसमत्वेनच १३ ततःकृतार्थोभवतीत्याह संप्रसन्नेसतिगु णैर्विमुक्तोऽतएवतत्कार्येणजीवेनलिंगशरीरेणनिर्मुक्तःसन्निर्वाणंसुखात्मकंब्रह्मप्राप्नोति १४ ॥ १४ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भ्रातृहंतृत्वमंगीकृत्योक्तं इदानीं तु नात्मनो भ्रातृपुत्रादिसंबंधः न चान्योऽन्यं हंतृत्वादिकमपीत्याह भूतैरिति दशभिः भूतैः पंचभिरारब्धैर्देहाद्याकारेण तैर्योषित्पुरुषश्चेति प्रसिद्धिः तयोर्व्यवायान्मैथुनात्संभूतिरन्ययोर्योषित्पुरुषयोरिह संसारे भवति १५ एवं तावत्सर्गः प्रवर्त्तते एवं पालकाकारेण परिणतैर्भूतैरेव स्थितिः हंतृदेहाकारपरिणतैः संयमः स च परमात्मनो मायया गुणानां व्यतिकरात् न तु स्वतः १६ ननु जडानां देहानां गुणानां वा कथं सर्गादिहेतु

भूतैः पंचभिरारब्धैर्योषित्पुरुष एव हि तयोर्व्यवायात्संभूतिर्योषित्पुरुषयोरिह १५॥
एवं प्रवर्त्तते सर्गः स्थितिः संयम एव च गुणव्यतिकराद्राजन्मायया परमात्मनः १६।
निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् १७ स खल्विदं भगवान्कालशक्त्या गुणप्रवाहेण विभक्तवीर्य्यः करोत्यकर्त्तैव। निहंत्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या १८ सोऽनंतोऽन्तकरः कालोऽनादिरादिकृदव्ययः॥

त्वं तत्राह निमित्तमात्रं पुरुषर्षभः ईश्वरः यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं भ्रमति परिवर्त्तते यथा अयस्कांते निमित्ते सति लोहं प्रवर्त्तते तद्वत् १७ ननु स चेन्निमित्तं तर्हि तस्याविशेषा युगपदेव सर्गादिः संभवेत् तत आह स खल्विति कालशक्त्या क्रमेण गुणानां प्रवाहः क्षोभस्तेन विभक्तं सृष्ट्यादिविषयवीर्यं शक्तिर्यस्य न तु कालोऽपि गुणान्युगपदेव क्षोभयतु तत्राह चेष्टा कालशक्तिः दुर्विभाव्या अचिंत्या १८ ननु पित्रादिः सृजति पालयति राजादिर्निहंति च चोरादिर्न त्वीश्वरस्तत्राह स इति जनेन पित्रादि॥ ७॥ ९॥ एमः॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

नाजनपुत्रादिंजनयन्मात्रादिकृत् अंतकंचोरादिकंतन्मृत्युहेतुनामारयन्नंतकरःस्वयंत्वनंतोऽनादिश्चअव्ययःअ
क्षीणशक्तिश्चअयंभावःपित्रादयःअन्यतउत्पत्त्यादिमंतोनस्वातंत्र्येणकारणंकिंत्वीश्वरएवतन्नियंतासर्वकारणमि
ति १९ नचैवंकुर्वतोऽपिवैषम्यप्रसक्तिःपक्षपाताभावादित्याशंक्याहद्वाभ्याम् नवाइति मृत्युरूपस्यसमंयथाभवतित
थाप्रजाःकर्मभूताविशतःनस्यसाम्येपिभूतेषुफलवैषम्यंतत्कर्मवशादितिसदृष्टांतमाह तंधावन्तम् अनुअनीशाःक

जनंजनेनजनयन्मारयन्मृत्युनांऽतकम् १९ नवैस्वपक्षोऽस्यविपक्षएववापरस्यमृ
सोर्विशतःसमंप्रजाः तंधावमानमनुधावंत्यनीशायथारजांस्यनिलंभूतसंघाः २०॥
आयुषोऽपचयंजंतोस्तथैवोपचयंविभुः उभाभ्यांरहितःस्वस्थोदुःस्थस्यविदधात्य
सौ २१ केचित्कर्मवदंत्येनंस्वभावमपरेनृप एकेकालंपरेदैवंपुंसःकाममुतापरे॥
२२ अव्यक्तस्याप्रमेयस्यनानाशक्त्युदयस्यच ॥ ६ ॥ ९ ॥ र्माधीनाभूतसंघाधा
वन्ति अनिलंधावंतमनुरजांसीवतत्रयथारजसांतमः प्रकाशजलाग्न्यादिप्रवेशेऽपिनानिलस्यवैषम्यं एवं
मीश्वरस्यापीतिभावः २० अपचयंअकालमृत्युउपचयंकालमृत्योरपिरक्षाम्यद्वा अपचयंमशकादौ उपचयंदे
वादौ स्वस्थत्वात् उपचयापचयाभ्यांरहितोऽसौविभु दुःस्थस्यकर्माधीनस्यविदधाति २१ एवंभूतश्चेश्वरःसर्ववादिसं
मतःविवादस्तुनाममात्रइत्याह केचिदिति पुंसःकामंवात्स्यायनादयःश्रुतिश्चकामोऽकार्षीत्कामःकरोतिकामःकर्ता

कामःकारयितेत्यादि २२ ननु कर्मादीनां जडत्वादिना ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्वरूपतोऽपि भिन्नत्वात्कथमैकमत्यं तत्राह अव्यक्तस्य अतएवाप्रमेयस्य तथापि सत्त्वे हेतुः नानाशक्तीनां महदादीनामुदयो यस्मात् चिकीर्षितमेव तावत्कोपि न वेद अथ स्वस्य संभवो यस्मात् तमीश्वरं को वेद न कोपि अद्धेति पाठे साक्षात् अतस्तत्त्वज्ञानाभावाद्विशेषांशे विवाद इत्यर्थः तथा च श्रुतिः को अद्धा वेद क इह प्रवोचत् कुत आतजाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्ज्जनेनाथ को वेद यत आबभूव इत्यादि २३ ईश्वरवादस्य प्रकृतोपयोगमाह नचैते भ्रा

नवैचिकीर्षितं तात कोवेदाथ स्वसंभवम् ॥ २३ ॥ नचैते पुत्रक भ्रातुर्हंतारो धनदानुगाः विसर्गादानयोस्तात पुंसो दैवं हि कारणम् २४ स एव विश्वं सृजति स एवावति हंति च तथापि ह्यनहंकारान्नाज्यते गुणकर्मभिः २५ एष भूतानि भूतात्मा भूतेशो भूतभावनः स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥ २६ तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि जगत्परायणं ॥ २७ ॥

तद्धंतारः उक्तमेव हेतुमनुवदति विसर्गादानयोर्मृत्युजन्मनोः यद्वा विसर्गः सृष्टिः आदानं संहारः दैवमीश्वर एव हि कारणम् २४ तथापि निर्लेपतामाह स एवेति २५ अनहंकारत्वे हेतुमाह एष इति २६ सत्यमीश्वर एव कर्त्ता तथाप्यहंकारादिमयात्यक्तुं न शक्यत इति चेदत आह तमेवेति चतुर्भिः मृत्युमभक्तानां भक्तानां त्वमृतं उपेहि शरणं गच्छ तमेवेत्यवधारणे हेतुः यस्मै नसि नासिकायां दामभिर्बद्धा गाव इव विश्वसृजोपि नामभिः यंत्रिताः बद्धाः ॥ २७ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

संतोबलिंहरंतितत्कारितंकर्मकुर्वंतीत्यर्थः २७ तदाराधनंचतवसुशकमेवेत्याह यःपंचवर्षःसत्वंयमाराध्य त्रिलोक्याःमूर्ध्निपदंस्थानंलेभेलब्धवानसिइदानींलमेवान्विच्छअवलोकयेत्युत्तरेणान्वयः यत्रसंविअक्षाणि यस्मिन्क्रियाविशेषणंवा २८ हरिंध्यायंतंप्रत्याहहेअंगध्रुवमुक्तविरोधेआत्मनिमनसिव्यपाश्रितंअवस्थितं

यस्मैबलिंविश्वसृजोहरंतिगावोयथावैनसिदामयंत्रिताः २७ यःपंचवर्षोजनन्या। नीत्वंविहायमातुःसपत्न्यावचसाभिन्नमर्मा वनंगतस्तपसाप्रत्यगक्षमाराध्य। लेभेमूर्ध्निपदंत्रिलोक्याः २८ तमेनमंगात्मनिमुक्तविग्रहंव्यपाश्रितंनिर्गुणमेक मक्षरम् आत्मानमन्विच्छविमुक्तआत्मदृक्यस्मिन्निदंभेदमसत्प्रतीयते २९। त्वंप्रत्यगात्मनितदाभगवत्यनंतआनंदमात्रउपपन्नसमस्तशक्तौ भक्तिंविधायप रमांशनकैरविद्याग्रंथिंविभेत्स्यसिममाहमितिप्ररूढम् ३० संयच्छरोषंभद्रंतेप्र। तीपंश्रेयसांपरम् श्रुतेनभूयसाराजन्नगदेनयथाऽमयम् ३१ येनोपसृष्टात्पुरुषा। ल्लोकउद्विजतेभृशम् नबुधस्तद्वशंगच्छेदिच्छन्नभयमात्मनः ३२॥ आत्मदृक्प्रत्य।

क्दृष्टिःसन्अर्वाक्दृष्टिस्सन् अयंभेदोयस्मिन्तदिदंभेदमसदेवविश्वंयस्मिन्प्रतीयतेतम् २९ तदन्वेषणफ लमाह त्वंतदा अन्वेषणकालएव ३० उपदेशसारमाह संयच्छेनिद्राभ्यां प्रतीपंप्रतिकूलंअगदेनौषधेनयथारोगं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अन्यच्चत्वयाकार्यमित्याह हेलनमितिद्वाभ्याम् यद्यतः जघ्निवान् घातितवान् ३३ । ३४ । ३५ ॥ इतिचतुर्थेटी॰
कायांएकोदशोध्यायः ११ ॥ द्वादशे धनदेनाभिनंदितः पुरमागतः यज्ञैरिष्ट्वाहरेः स्थानमारुरोहेतिकीर्त्यते १ ।

हेलनंगिरिशभ्रातुर्धनदस्यत्वयाकृतम् यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यम
र्षितः ३३ तंप्रसादयवत्साशुसन्नत्याप्रश्रयोक्तिभिः नयावन्महतांतेजः कुलंनो॰
भिभविष्यति ३४ एवंस्वायंभुवः पौत्रमनुशास्यमनुर्ध्रुवम् तेनाभिवंदितः साकमृ
षिभिः स्वपुरंययौ ३५ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेएकादशोऽध्या॰
यः ११ ॥ मैत्रेयउवाच ध्रुवंनिवृत्तंप्रतिबुद्ध्यवैशसादपेतमन्युर्भगवान् धनेश्व॰
रः तत्रागतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवदत्कृतांजलिम् १ धनदउ॰
वाच भोभोःक्षत्रियदायादपरितुष्टोऽस्मितेऽनघ यत्त्वंपितामहादेशाद्वैरंदुस्त्यज
मत्यजः २ नभवानवधीद्यक्षान्नयक्षाभ्रातरंतव कालएवहिभूतानांप्रभुरप्ययभा

वैशसाद्वधान्निवृत्तंज्ञात्वा १ हेक्षत्रियदायादहेक्षत्रियपुत्र अत्यजस्त्यक्तवानसि २ नच॰ ॥ वयोः ३ ॥
वैरस्यकारणमस्तीत्याह नभवानिति अप्ययभावयोर्मृत्युजन्मनोः ३ ॥ ३ ॥ ६ ॥ श्रीरामः ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कथंतर्हि अहमहंतेस्यादिबुद्धिस्तत्राह अहंत्वमिति आभाति प्रकाशते जायते इत्यर्थः अतद्ध्यानात् देहानुसंधाना
त्ययाधियाबंधः कर्मविपर्ययो दुःखादिः ४ तत्तस्माद्गच्छ गत्वाचभगवंतंभजस्वेत्युत्तरेणान्वयः सर्वभूतात्मके

अहंत्वमित्यपार्थाधीरज्ञानात्पुरुषस्यहि स्वाप्नीवाभात्यतद्ध्यानाद्ययाबंधविपर्ययौ
४ तद्गच्छध्रुवभद्रंतेभगवंतमधोक्षजम् सर्वभूतात्मभावेनसर्वभूतात्मविग्रह-
म् ५ भजस्वभजनीयांघ्रिमभवायभवच्छिदम् युक्तंविरहितंशक्त्यागुणमय्यात्म
मायया ६ वृणीहिकामंनृपयन्मनोगतंमत्तस्त्वमौत्तानपदेऽविशंकितः यतोवरा
र्हांबुजनाभपादयोरनंतरंत्वांवयमंगशुश्रुम ७ मैत्रेयउवाच सराजराजेनवराय
चोदितोध्रुवोमहाभागवतोमहामतिः हरौसवव्रेऽचलितांस्मृतिंययातरत्ययत्नेन
दुरत्ययंतमः ८ तस्यप्रीतेनमनसातांदत्वैडविडस्ततः पश्यतोऽतर्दधेसोपिस्वपुरं
प्रत्यपद्यत ९ अथायजतयज्ञेशंक्रतुभिर्भूरिदक्षिणैः द्रव्यक्रियादेवतानांकर्मक
र्मफलप्रदम् १०

विग्रहोयस्य ५ माययायुक्तं विरहितंसगुणनिर्गुणभेदेन ६ काममसंकोचेनअविशं
कितः निःशंकः अनंतरंअतिनिकटं ७ सवरायचोदितइत्यनुवादरूपंपृथग्वाक्यंअतःसचवव्रइतितच्छब्दस्या
पौनरुक्त्यं ८।९ द्रव्यक्रियादेवतानांकर्मसाध्यंफलरूपंकर्मफलप्रदंचेत्यर्थः १० ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सर्वस्यात्मनि असर्वे सर्वोपाधिवर्जिते ११।१२ भोगैः ऐश्वर्यादिभिः अभोगैर्यज्ञाद्यनुष्ठानैः १३ बहवः सर्वाः यागाः संव
त्सरा वा यस्मिन् तं कालं त्रिवर्गसाधनं नीत्वा अविचलानि संयतानि इंद्रियाणि यस्य १४ इदं देहादि भगवन्मायया

सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् ददर्शात्मनि भूतेषु तमेवावस्थितं विभुम्
११ तमेवं शीलसंपन्नं ब्रह्मण्यं दीनवत्सलम् गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः
१२ षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमंडलम् भोगैः पुण्यक्षयं कुर्वन्नभोगैरशुभक्ष
यम् १३ एवं बहुसवं कालं स हात्माविचलेंद्रियः त्रिवर्गौपयिकं नीत्वा पुत्रायादान्नृ
पासनम् १४ मन्यमान इदं विश्वं मायारचितमात्मनि अविद्यारचितस्वप्नगंधर्वनग
रोपमम् १५ आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोशमंतःपुरं परिविहारभुवश्च रम्याः।
भूमंडलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालाम् १६ त
स्यां विशुद्धकरणः शिववार्विगाह्य बध्वासनं जितमरुन्मनसाऽहृताक्षः।

स्विन् रचितं मन्यमानः अत्राविद्यासृष्टिं दृष्टांतयति अविद्यारचितमिति १५ आत्मा देहः आत्मादि मायिकम
पि पुनः कालेनोपसृष्टमनित्यमित्याकलय्य विचिंत्य विशालां बदरिकाश्रमम् १६ तत्र तत्कृतमष्टांगयोगमा
ह तस्यां शिवं वाः उदकं विगाह्य प्रविश्येति स्नानादि नियमा उक्ताः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विशुद्धकरण इति शमादयो यमाः आसनादीनि स्फुटमेवोक्तानि जितो मरुत्प्राणो येन आहृतान्यक्षाणि येन भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे एतन्मनो दधार ध्यायन् अव्यवहितो ध्यातृध्येयभेदशून्यः सन्समाधौ स्थितः तत्स्थूलं व्यसृजत् १७ एवमजस्रं नित्यं हरौ भक्तिं प्रकर्षेण वहन् असौ ध्रुवोऽहमिसात्मानं नसस्मार यतो मुक्त लिं

स्थूले दधार भगवत्प्रतिरूप एतद्ध्यायंस्तदव्यवहितो व्यसृजत्समाधौ १७ —

भक्तिं हरौ भगवति प्रवहन्नजस्रमानंदबाष्पकलया मुहुरर्द्यमानः विक्लिद्यमानहृदयः पुलकाचितांगो नात्मानमस्मरदसाविति मुक्तलिंगः १८ स ददर्श विमानाग्र्यं नभसोऽवतरद्ध्रुवः विभ्राजयद्दशदिशो राकापतिमिवोदितम् १९ तत्रानु देवप्रवरौ चतुर्भुजौ श्यामौ किशोरावरुणांबुजेक्षणौ स्थिताववष्टभ्य गदां सुवाससौ किरीटहारांगदचारुकुंडलौ २० विज्ञाय तावुत्तमगायकिंकरावभ्युत्थितः साध्वसविस्मृतक्रमः ननाम नामानि गृणन्मधुद्विषः पार्षत्प्रधानाविति संहतांजलिः २१ ॥

गः त्यक्तशरीराभिमानः तत्र हेतवः आनंदबाष्पस्य कलया बिंदुप्रवाहेण अभिभूयमानः विक्लिद्यमानं द्रवत् हृदयं यस्य पुलकैर्व्याप्तांगः १८ । १९ अनु अनंतरं देवप्रवरौ ददर्शेत्यनुषंगः गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुणी कुंडले ययोः २० उत्तमगायः पुण्यश्लोकः तस्य किंकरौ तौ विज्ञाय मधुद्विषः पार्षत्प्रधानाविति हेतोः साध्वसेन संभ्रमेण विस्मृतपूजाक्रमः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२२ कृ भद्रं इति सशरीरस्यैव विष्णुपदारोहाभिप्रायं अतीतपत् तर्पितवान् २३ आवां तस्य पार्षदौ २४ कृ दुर्जयत्वे हे
तुः सूरयः सप्तर्षयोऽपि यत्प्राप्य केवलमधः स्थिताः पश्यंति यच्च चंद्रादयः प्रदक्षिणं यथा भवति एवं परिक्रामंतिन.

तं कृष्णपादाभिनिविष्टचेतसं बद्धांजलिं प्रश्रयनम्रकंधरम् कृ नंदनंदावुपसृत्य सस्मितं प्रत्यूचतुः पुष्करनाभसंमतौ २२ श्रीकृ नंदनंदावूचतुः भोभो राजन् कृ भद्रं ते वाचं नोऽवहितः शृणु यः पंचवर्षस्तपसा भवान्देवमतीतृपत् २३ तस्याखिलजगद्धातुरावां देवस्य शार्ङ्गिणः पार्षदाविह संप्राप्तौ नेतुं त्वां भगवत्पदम् २४ कृ दुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम् आतिष्ठ तच्चंद्रदिवाकरादयो ग्रहर्क्षताराः परियंति दक्षिणम् २५ अ नास्थितं ते पितृभिरन्यैरप्यंग कर्हिचित् आतिष्ठ जगतां वंद्यं तद्विष्णोः परमं पदम् २६ एतद्विमानप्रवरमुत्तमश्लोकमौलिना उपस्थापितमायुष्मन्नधिरोढुं त्वमर्हसि २७ श्रीमैत्रेय उवाच निशम्य वैकुंठनियोज्यमुख्ययोर्मधुच्युतां वाचमुरुक्रमप्रियः कृताभिषेकः कृतनित्यमंगलो मुनीन्प्रणम्याशिषमभ्यवादयत्

दातिष्ठ अधितिष्ठ २५।२६ आयुष्मन्नित्यपि सशरीरप्राणाभिप्रायमेव २७ मधु च्यवते स्रवतीति मधुच्युत् तां पाठांतरे मधुच्युतं यस्यां तामम्रुतस्राविणीमित्यर्थः कृतं नित्यं कर्म मंगलं चालंकरणं येन अभ्यवादयत् वाद

तद्देवरूपंहिरण्मयंप्रकाशवद्रूपंबिभ्रत्सद् इयेषऐच्छत् २९ गृहंविमानंअयंभावःयदाध्रुवःविमानमारोढुमैच्छ
त्तदामृत्युरागत्यप्रणम्योवाचहेमहाराजमामंगीकुरु उवाचध्रुवःस्वागतंतेक्षणंतावदुपविश एवमुक्त्वाध्रुवःविष्णोः
स्मरणंकृत्वामृत्योर्मूर्ध्निपदंदत्त्वाविमानाग्र्यमारुरोह ३०।३१ दीनांहित्वा अगंदुर्गंत्रिविष्टपंकथंयास्यामीत्यन्वस्मर

परीत्याभ्यर्च्यधिष्ण्याग्र्यंपार्षदावभिवंद्यच इयेषतदधिष्ठातुंबिभ्रद्रूपंहिरण्मयम् २९
तदोत्तानपदःपुत्रोददर्शांतकमागतम् मृत्योर्मूर्ध्निपदंदत्त्वाआरुरोहाद्भुतंगृहम् ३० त
दादुंदुभयोनेदुर्मृदंगपणवादयः गंधर्वमुख्याःप्रजगुःपेतुःकुसुमवृष्टयः ३१ सचस्व
र्लोकमारोक्ष्यन्सुनीतिंजननींध्रुवः अन्वस्मरदगंहित्वादीनांयास्येत्रिविष्टपम् ३२
इतिव्यवसितंतस्यव्यवसीयसुरोत्तमौ दर्शयामासतुर्देवींपुरोयानेनगच्छतीम् ३३
तत्रतत्रप्रशंसद्भिःपथिवैमानिकैःसुरैः अवकीर्यमाणोददृशेकुसुमैःक्रमशोग्रहा
न् ३४ त्रिलोकींदेवयानेनसोऽतिव्रज्यमुनीनपि परस्ताद्यद्ध्रुवगतिर्विष्णोःपदमथा
भ्यगात् ३५ यद्भ्राजमानंस्वरुचैवसर्वतोलोकास्त्रयोह्यनुविभ्राजंतएते॥ छी

व्यवसितमभिप्रायंव्यवसीयज्ञात्वा ३३।३४ देवयानेनदेवमार्गेणविमानेनेतिवामुनीन्सप्तऋषीनपितेनःप
रस्ताद्यद्विष्णोःपदंतदभ्यगात् ध्रुवागतिर्यस्यसः ३५ यतद्भ्राजमानमनुयस्यरुचालोकाविभ्राजन्ते॥ छी ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

येऽनन्तुग्रहानिष्कृपाः तेयन्नाव्रजन्नतगतवंतः ३६ अच्युतः प्रियबांधवोयेषाम् ३७ । ३८ अनिमिषंअनलसं।
ज्योतिषांचक्रंयस्मिन्नाहितं अर्पितंसङ्क्रमति मेढ्यामाहितोगंभीरवेगोगवांगणइव ३९ आतोद्यंवीणांवितुदन्।
वादयन्प्रचेतसांब्रह्मसत्रेभगवन्माहात्म्यप्रसंगेनध्रुवमहिमप्रतिपादनपरान्त्रीन्श्लोकानगायत् ४० नूनं

यन्नाऽव्रजन्नजंतुषुयेऽननुग्रहाव्रजंतिभद्राणिचरंतियेऽनिशम् ३६ शांताःसमदृशः
शुद्धाःसर्वभूतानुरंजनाः यांत्यंजसाऽच्युतपदमच्युतप्रियबांधवाः ३७ इत्युत्तानप।
दःपुत्रोध्रुवःकृष्णपरायणः अभूत्त्रयाणांलोकानांचूडामणिरिवामलः ३८ गंभीर
वेगोऽनिमिषंज्योतिषांचक्रमाहितम् यस्मिन्भ्रमतिकौरव्यमेढ्यामिवगवांगणः
३९ महिमानंविलोक्यास्यनारदोभगवानृषिः आतोद्यंवितुदञ्श्लोकान्सत्रेऽगाय।
त्प्रचेतसाम् ४० श्रीनारदउवाच नूनंसुनीतेःपतिदेवतायास्तपःप्रभावस्यसुतस्यतां
गतिम् दृष्ट्वाऽभ्युपायानपिवेदवादिनोनैवाधिगंतुंप्रभवंतिकिंनृपाः ४१ यःपंचव।
र्षोगुरुदारवाक्शरैर्भिन्नेनयातोहृदयेनदूयता ॥

मिति पतिरेवदेवतायस्यास्तस्याःसुत।
स्ययस्तपःप्रभावःतस्यतांगतिंफलमधिगंतुंवेदवादनशीलाब्रह्मर्षयोऽपिनैवप्रभवंतिअभ्युपायान्भगवद्धर्मा।
न्दृष्ट्वापिकिंपुनर्नृपाः ४१ तपःप्रभावंगतिंचविशिनष्टिद्वाभ्याम् गुरुदाराःपितृपत्नीसुरुचिस्तस्यावाक्शरैः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भिन्नेनतद्दयेनवनंयातःसन्अजितमपियोजिगायवशीकृतवान् ४२ तस्याधिरूढंतेनप्राप्तंपदंयोभुविक्षत्र
बंधुःक्षत्रियोभवेत्सःतमनुवर्षसमूहैरपिआरोढुमिच्छेदपिकिंततसंकल्पोऽप्यशक्यःदूरतआरोहणमित्य।
र्थःकथंभूतंपदंषड्वापंचवावर्षाणियस्यसःअल्पैरेवाहोभिःवैकुंठंप्रसाध्ययत्तस्यपदमवापतत् ४३ उद्दामसुत

वनंमहादेशकरोऽजितंप्रभुंजिगायतद्भक्तगुणैःपराजितम् ४२ यःक्षत्रबंधुर्भुवित।
स्याधिरूढमन्वारुरुक्षेदपिवर्षपूगैः षट्पंचवर्षोयदहोभिरल्पैःप्रसाध्यवैकुंठम।
वापतत्पदम् ४३ श्रीमैत्रेयउवाच एतत्तेभिहितंसर्वंयत्पृष्टोऽहमिहत्वया ध्रुवस्योद्दा
मयशसश्चरितंसंमतंसताम् ४४ धन्यंयशस्यमायुष्यंपुण्यंस्वस्त्ययनंमहत् स्वर्ग्यं
ध्रौव्यंसौमनस्यंप्रशंस्यमघमर्षणम् ४५ श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टित।
म् भवेद्भक्तिर्भगवतिययास्यात्क्लेशसंक्षयः ४६ महत्त्वमिच्छतांतीर्थंश्रोतुःशीला
दयोगुणाः यत्रतेजस्तदिच्छूनांमानोयत्रमनस्विनाम् ४७ प्रयतःकीर्तयेत्प्रातःस
मवायेद्विजन्मनाम् सायंचपुण्यश्लोकस्यध्रुवस्यचरितंमहत् ४८॥ त्वंयशोयस्य ४४

धनादेर्निमित्तंध्रौव्यंध्रुवस्थानप्रापकंयशस्यंप्रशंसार्हंअघमर्षणंपापनाशनम् ४५ अच्युतप्रियस्यध्रुवस्य
चेष्टितंश्रुत्वायोवर्ततेतस्यभक्तिर्भवेत् ४६ तीर्थमहत्त्वावाप्तिस्थानंगुणाःयत्रभवंति ४७ समवायेसभायाम् ४८

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

४९ नेच्छन्निष्कामः तत्र श्रवणे आत्मनैवात्मानंप्रतिसंतुष्टो भवतीति हेतोः सिद्धिंप्राप्नोति ५० किंचसत्पथे भगवन्मार्गे अमृतरूपंज्ञानंयोदद्यात् ५१ ध्रुवस्यचरितंमयातेऽभिहितंमातुर्गृहंचहित्वा ५२ ॥ इतिचतुर्थेटीका

पूर्णमास्यांसिनीवाल्यांद्वादश्यांश्रवणेऽथवा दिनात्ययेव्यतीपातेसंक्रमेऽर्कदिनेऽपिवा ४९ श्रावयेच्छ्रद्दधानानांतीर्थपादपदाश्रयः नेच्छंस्तत्रात्मनात्मानंसंतुष्टइतिसिध्यति ५० ज्ञानमज्ञाततत्त्वाययोदद्यात्सत्पथेऽमृतम् कृपालोर्दीननाथस्यदेवास्तस्यानुगृह्णते ५१ इदंमयातेऽभिहितंकुरूद्वह ध्रुवस्यविख्यातविशुद्धकर्मणः हित्वाऽर्भकःक्रीडनकानिमातुर्गृहंचविष्णुंशरणंयोजगाम ५२ इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धेध्रुवचरितेध्रुवपदारोहणंनामद्वादशोऽध्यायः १२

सूतउवाच निशम्यकौषारविणोपवर्णितंध्रुवस्यवैकुंठपदाधिरोहणम् प्ररूढभावोभगवत्यधोक्षजे प्रष्टुंपुनस्तंविदुरःप्रचक्रमे १ विदुरउवाच केतेप्रचेतसोनामकस्यापत्यानिसुव्रत कस्यान्ववायेप्रख्याताःकुत्रवासत्रमासते २ ॥

यांद्वादशोऽध्यायः १२ एवंपंचभिरध्यायैर्ध्रुवचर्यानुवर्णिता अथैकादशभिश्चित्रंपृथुचारित्रमुच्यते १ तत्रत्रयोद



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्ररूढोभावोभक्तिर्यस्य १ अन्ववायेवंशे २ नारदेनप्रचेतसांसत्रेवर्णिताःकथाःप्रष्टुंतन्महिमानमाह मन्यइति। ३ देवस्यदर्शनंहरेःपरिचर्याप्रकारःक्रियायोगःपंचरात्रेयेनप्रोक्तः ३ स्वधर्मशीलैःप्रचेतोभिः ४ । ५ ध्रुवस्यवंशेतेजा नाइतिवक्तुंध्रुवस्यवंशमनुक्रामतिध्रुवस्येत्यादिना पितुःसार्वभौमश्रियंनैच्छत् अधिराजासनंच ६ अनिच्छायां

मन्येमहाभागवतंनारदंदेवदर्शनम् येनप्रोक्तःक्रियायोगःपरिचर्याविधिर्हरेः ३ स्वधर्मशीलैःपुरुषैर्भगवान्यज्ञपूरुषः ईज्यमानोभगवतानारदेनेडितःकिल ४ यास्तादेवर्षिणातत्रवर्णिताभगवत्कथाः मह्यंशुश्रूषवेब्रह्मन्कात्स्न्र्येनाचष्टुमर्हति ५ श्रीमैत्रेयउवाच ध्रुवस्यचोत्कलःपुत्रःपितरिप्रस्थितेवनम् सार्वभौमश्रियंनैच्छदधिराजासनंपितुः ६ सजन्मनोपशांतात्मानिःसंगःसमदर्शनः ददर्शलोकेविततमात्मानंलोकमात्मनि ७ आत्मानंब्रह्मनिर्वाणंप्रत्यस्तमितविग्रहम् अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ८ अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः स्वरूपमवरुंधानोनात्मनोऽन्यंतदैक्षत ९ जडांधवधिरोन्मत्तमूकाकृतिरतन्मतिः॥ ॥ हेतुनाह

स इतिचतुर्भिः ७ आत्मानंस्वरूपभूतंब्रह्मावरुंधानः आप्नुवन्जानन् आत्मनोनान्यंतदैक्षत स्वयंतुसर्वस्मादन्यःसन् कथंभूतंब्रह्मनिर्वाणंशांतम् अवबोधरसैनैकात्म्यंयस्य ८ कथंभूतःअव्यवच्छिन्नोयोयोगःसएवाग्निस्ते

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

र्यस्यतथाभूतोलक्षितः अतन्मतिः नतेषामिवमतिर्य्यस्यसर्वज्ञत्वात् प्रशांतान्यर्चींषिज्वालायस्यानलस्यतद्वत्
स्थितः १० यवीयांसमुत्कलाकनिष्ठम् ११ इष्टाप्रियाभार्या १२। १३ निशिथः निशीथोमध्यरात्रिः व्युष्टः प्रातःकालः

लक्षितःपथिबालानांप्रशांतार्चिरिवानलः १० मत्वातंजडवन्मत्तंकुलवृद्धाःसमंत्रि
णः वत्सरंभूपतिंचक्रुर्यवीयांसंभ्रमेःसुतम् ११ स्ववींथिर्वत्सरस्येष्टाभार्याऽसूतष
डात्मजान् पुष्पार्णंतिग्मकेतुंचइषमूर्जंवसुंजयम् १२ पुष्पार्णस्यप्रभाभार्यादोषाच
द्वेबभूवतुः प्रातर्मध्यंदिनंसायमितिह्यासन्प्रभासुताः १३ प्रदोषोनिशिथोव्युष्टइति
दोषासुतास्त्रयः व्युष्टःसुतंपुष्करिण्यांसर्वतेजःसमादधे १४ सचक्षुःसुतमाकूत्यां
पत्न्यांमनुमवापह मनोरसूतमहिषीविरजान्नड्वलासुतान् १५ पुरुंकुत्संत्रितंद्यु
म्नंसत्यवंतंघृतव्रतम् अग्निष्टोममतिरात्रंप्रद्युम्नंशिबिमुल्मुकम् १६ उल्मुकोः
जनयत्पुत्रान्पुष्करिण्यांषडुत्तमान् अंगंसुमनसंख्यातिंक्रतुमंगिरसंगयम् १७॥
सुनीथांऽगस्ययापत्नीसुषुवेवेनमुल्बणम् यद्दौःशील्यात्सराजर्षिर्निर्विण्णोनिरगा

तदभिमानिन्योदेवताः १४ ससर्वतेजाः चक्षुःसंज्ञंमनुंसुतंपुत्रमवापमनोर्महिषीनड्वला ॥ त्पुरात् १८।
विरजान्षड्वान्पुरुप्रमुखान् एकादशसुतानसूत १५। १६। १७। १८ ॥ छ ॥ छ ॥ श्रीरामचंद्रः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अंगविदुरवागेववज्रंयेषाम् १९ मथनेहेतुःअजराजकइतिआद्यःपुरग्रामादीनांतेनरचितत्वात् २० यद्यस्याः प्रजायाहेतोर्विमनाःसन्ययौ २१ किंवाअंहःअपराधंवेनमुद्दिश्यआलक्ष्यमुनयःभृग्वादयस्तेमुनयइतिवक्ष्य

यमंगशेपुःकुपितावाग्वज्रामुनयःकिल गतासोस्तस्यभूयस्तेममंथुर्दक्षिणंकरम् १९
अराजकेतदालोकेदस्युभिःपीडिताःप्रजाः जातोनारायणांशेनपृथुराद्यःक्षितीश्वरः
२० विदुरउवाच तस्यनीलनिधेःसाधोर्ब्रह्मण्यस्यमहात्मनः राज्ञःकथमभूद्दुष्टाप्रजाः
यद्विमनाययौ २१ किंवांऽहोवेनमुद्दिश्यब्रह्मदंडमयूयुजन् दंडव्रतधरेराज्ञिमुनयो
धर्मकोविदाः २२ नावध्येयःप्रजापालःप्रजाभिरघवानपि यदसौलोकपालानांबि
भर्त्योजःस्वतेजसा २३ एतदाख्याहिमेब्रह्मन्सुनीथात्मजचेष्टितम् श्रद्दधानायभ
क्तायत्वंपरावरवित्तमः २४ मैत्रेयउवाच अंगोऽश्वमेधंराजर्षिराजहारमहाक्रतुम्
नाजग्मुर्देवतास्तस्मिन्नाहूताब्रह्मवादिभिः २५ तमूचुर्विस्मितास्तत्रयजमानम
थर्त्विजः हवींषिहूयमानानिनतेगृह्णंतिदेवताः २६ ॥ ॥ माणत्वात् २२ यतोयमधर्मइत्याह ना वध्येयःअवज्ञेयोपिनभवति २३ परावरविदांमध्येअतिश्रेष्ठः २४ अभावीपुत्रःकाम्यकर्मणाबलाद्दापादितोनस्वायंभवेदितिद्योतयन्नंगस्यपुत्रोत्पत्तिक्रममाह अंगइत्यादिना २५। २६ ॥ ॥ ॥ ॥ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अया तयामानि अगतवीर्याणि २७।२८ यज्ञे गृहीतं मे नोऽपि वा चं व्यसृजत् प्रायुंक्त २९ आहुता आहूताः। ग्रहान्सोमपात्राणि इह यज्ञे न गृह्णन्ति ३० इह जन्मनि तावन्मनाक् ईषदपि अघं न स्थितं कथंचिज्ज्ञातसाऽघ।

राजन्हवींष्यदुष्टानि श्रद्धयासादितानि ते छंदांस्ययातयामानि योजितानि धृतव्र।
तैः २७ न विदामेह देवानां हेलनं वयमण्वपि यन्न गृण्हंति भागान्स्वान्ये देवाः कर्मसा
क्षिणः २८ मैत्रेय उवाच अंगो द्विजवचः श्रुत्वा यजमानः स्वदुर्मनाः तत्प्रष्टुं व्यसृजद्वा
चं सदस्यांस्तदनुज्ञया २९ नागच्छंत्याहुता देवा न गृह्णंति ग्रहानिह सदसस्पतयो ब्रू
त किमवद्यं मया कृतम् ३० सदसस्पतय ऊचुः नरदेवेह भवतो नाऽघं तावन्मनाक्।
स्थितम् अस्त्येकं प्राकृतनमघं यदिहेदृक्त्वमप्रजः ३१ तथा साधय भद्रं ते आत्मा
नं सुप्रजं नृप इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ३२ तथा स्वभागधेयानि।
ग्रहीष्यंति दिवौकसः यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ३३ ॥ ऽस्य सद्य एव प्रायश्चि

त्तैः क्षालनात् किंतु प्राकृतनमेकमघमस्ति यद्यस्मात् ईदृक् गुणाधिकोऽपि त्वं प्रजारहितः ३१ अतो यथा देवा हविर्गृण्हंति तथात्मानं सुप्रजं साधय कथं साधनीयं तदाहुः इष्ट इति ३२ तथा सति स्वभागान् ग्रहीष्यंति यद्य एमः
नो हरिः साक्षाद्वृत्तः स्यात् अतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः ३३ ॥ ३३ ॥ ७ ॥ ५ ॥ ५२

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

नन्वतितुच्छान्कामान्हरिः कथं दद्यात्तत्राह तांस्तानिति ३४ प्रजातये पुत्रोत्पत्तये शिपिविष्टाय पशुषु यज्ञरूपेण प्रविष्टाय तथा च श्रुतिः यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठतीति ३५ तस्मादिति योग्यतया ग्रे:

तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः आराधितो यथैवैषां तथा पुंसां फलोदयः ३४ इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये पुरोडाशं निरवपञ्छिपिविष्टाय विष्णवे ३५ तस्मात्पुरुष उत्तस्थौ हेममाल्यमलांबरः हिरण्मयेन पात्रेण सिद्धमादाय पायसम् ३६ स विप्रानुमतो राजा गृहीत्वांऽजलिनौदनम् अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः ३७ सा तत्पुंसवनं राज्ञी प्राश्य वै पत्युरादधे गर्भं काल उपावृत्ते कुमारं सुषुवेऽप्रजा ३८ स बाल एव पुरुषो मातामहमनुव्रतः अधर्मांशोद्भवं मृत्युं तेनाऽभवदधार्मिकः ३९ स शरासनमुद्यम्य मृगयुर्वनगोचरः हंति साधून्मृगान्दीनान्वेनोऽसावित्यरौज्जनः ४० आक्रीडे क्रीडतो बालान्वयस्यानतिदारुणः प्रसह्य निरनुक्रोशः पशुमारममारयत् ४१॥

॥ ३६ पत्न्यै प्रादात् ३७ पुमांसं सूतेऽनेनेति तथा तत्प्राश्य पत्युः सकाशाद्गर्भमादधे अप्रजा सती ३८ मातामहं मृत्युं स सो हि पुत्री कनीयान् ३९ मृगयुर्लुब्धकः सन् तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौत्सुक्रोश ४० आक्रीडे क्रीडास्थाने बालान्पशुवन्निवामारयत्॥ ४१ ॥ ४१ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विचक्ष्यदृक्षा ४२ दुर्मनसस्तस्य कुपुत्रनिंदावाक्यान्याह प्रायेणेति त्रिभिः अप्रजाः येनैरभ्यर्चितः तत्र हेतुः कुत्सितैरपत्यैः
संभृतं दुर्भरं धारयितुमशक्यं दुःखं येन विंदंति ४३ सर्वेषां सर्वैः सह आधिर्मानसी व्यथा ४४ तं प्रजापदेशं पुत्रनाममा
त्रमपि आत्मनो मोहेन बंधनम् यदर्थाः यन्निमित्ताः क्लेशदा गृहा भवंति ४५ इदानीं निर्वेदहेतुत्वेन कुत्सितमेवाप-

तं विचक्ष्य खलं पुत्रं शासनैर्विविधैर्नृपः यदा न शासितुं कल्यो भृशमासीत्सुदुर्मनाः
४२ प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः कदपत्यभृतं दुःखं येन विंदंति दुर्भर
म् ४३ यतः पापीयसी कीर्त्तिरधर्मश्च महान्नृणाम् यतो विरोधः सर्वेषां यत आधि
रनंतकः ४४ कस्तं प्रजाऽपदेशं वै मोहबंधनमात्मनः पंडितो बहु मन्येत यदर्थाः क्ले
शदा गृहाः ४५ कदपत्यं वरं मन्ये सदपत्याच्छुचां पदात् निर्विद्येत गृहान्मर्त्यो यत्क्ले
शनिवहा गृहाः ४६ एवं स निर्विण्णमना नृपो गृहान्निशीथ उत्थाय महोदयोदयात्॥
अलब्धनिद्रोऽनुपलक्षितो नृभिर्हित्वा गतो वेनसुवं प्रसुप्ताम् ४७ विज्ञाय निर्वि
द्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः विचिक्युरुर्व्यामतिशोककातरा
यथा निगूढं पुरुषं कुयोगिनः ४८॥ त्यमभिनंदति कदपत्यमिति शुचां पदात् शोकानां स्थानात्त्व
रवेहेतुः निर्विद्येतेति तत्कुतः यद्यतः कदपत्यात् गृहाः क्लेशनिवहा भवंति ४६ महतामुदयानां विभूतीनामुदये

दयश्चविचिक्युः अन्वेषितवंतः तंतुतत्रैवसंतमपिनापश्यन्निति दृष्टांतेनाह यथेति ४८॥ ॥ सांश्रवःरुदंतःभर्तुर्विप्लवं विनाशं अदर्शनमित्यर्थः ४९ ॥इतिचं॰टी॰त्रयोदशः १३॥ चतुर्दशेतुदुष्टेन्वभयादंगेगतेद्विजैःअभिषिक्तस्य

अलक्षयंतः पदवींप्रजापतेर्हतोद्यमाःप्रत्युपसृज्यतेपुरीम् ऋषीन्समेतानभिवंद्यसाश्रवोन्यवेदयन्पौरवभर्तृविप्लवम् ४९ ॥इति श्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोदशोध्यायः १३ श्रीमैत्रेयउवाच भृग्वादयस्तेमुनयोलोकानांक्षेमदर्शिनः गोप्तर्यसति वैनॄणांपश्यंतःपशुसाम्यताम् १ वीरमातरमाहूयसुनीथांब्रह्मवादिनः प्रकृत्यसंमतंवेनमभ्यषिंचन्पतिंभुवः २ श्रुत्वानृपासनगतंवेनमत्युग्रशासनम् निलिल्युर्दस्यवःसर्वेसर्पत्रस्ताइवाखवः ३ स आरूढनृपस्थानउन्नद्धोऽष्टविभूतिभिः अवमेनेमहाभागांस्तब्धःसंभावितःस्वतः ४ एवंमदांधउत्सिक्तोनिरंकुशइवद्विपः पर्यटन्रथमास्थायकंपयन्निवरोदसीम् ५ नयष्टव्यंनदातव्यंनहोतव्यंद्विजाःक्वचित् एवंन्यवारयद्धर्मंभेरीघोषेणसर्वतः ६ वेनस्यावेक्ष्यमुनयोदुर्वृत्तस्यविचेष्टितम्॥

वेनस्यरोषात्तेर्वधउच्यते १ क्षेमदर्शिनःक्षेमचिंतकाःपशुसमानरूपतांपश्यंतः १ अमात्यादीनांप्रकृतीनामसंमतम् पाठांतरेप्रकृत्यास्वभावेनासंमतम् २ चोराःसर्वेलीनाःबभूवुः ३ आरूढंनृपस्थानंराजासनंयेन अष्टविभूतिभिर्लोक॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मिलिताः संतः ७ मूलतश्चाग्रतश्च दीप्ते प्रज्वलिते काष्ठे तन्मध्यवर्त्तिनां पिपीलिकादीनां यथोभयतो व्यसनं एवं तस्क
रेभ्यः पालकाच्च दुःखं प्राप्तमित्यर्थः ८ तदेवाहुः अराजकभयादिति अतदर्हणः राज्यानर्हः ९ अस्माकमप्यनिष्टं जान

विमृश्य लोकव्यसनं कृपयोचुः स्म सत्रिणः ७ अहो उभयतः प्राप्तं लोकस्य व्यसनं मह
त् दारुण्युभयतो दीप्ते इव तस्करपालयोः ८ अराजकभयादेष कृतो राजाऽतदर्हणः त
तोऽप्यासीद्भयं त्वद्य कथं स्यात्स्वस्ति देहिनाम् ९ अहेरिव पयःपोषः पोषकस्याप्यनर्थ
भृत् वेनः प्रकृत्यैव खलः सुनीथागर्भसंभवः १० निरूपितः प्रजापालः स जिघांसति
वै प्रजाः तथापि सांत्वयेमामुं नास्मांस्तत्पातकं स्पृशेत् ११ तद्विद्वद्भिरसद्वृत्तो वेनोऽस्मा
भिः कृतो नृपः सांत्वितो यदि नो वाचं न ग्रहीष्यत्यधर्मकृत् १२ लोकधिक्कारसंदग्धं
दहिष्यामः स्वतेजसा एवमध्यवसायैनं मुनयो गूढमन्यवः उपव्रज्याब्रुवन्वेनं सांत्व
यित्वा च सामभिः १३ मुनय ऊचुः नृपवर्य निबोधैतद्यत्ते विज्ञापयाम भोः ॥ ७ ॥ ८ ॥

मित्याहुः अहेर्यथा पयःपोषः क्षीरेण पोषणं पोषकस्याप्यनर्थं बिभर्ति पुष्णाति तदेवाहुः वेन इति १० निरूपितः
नियुक्तोऽस्माभिः सांत्वयेम उपपत्तिभिः प्रार्थयिष्यामः तस्य पातकम् ११ खसतसातकस्पर्शहेतुः तत्पातकत्वं वि
द्वद्भिः १२ गूढो मन्युर्येषां सामभिः प्रियोक्तिभिः १३ ॥ १३ ॥ ७ ॥ ८ ॥ ७ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

१४ निष्कामानां आनंत्यं मोक्षमपि १५ मा विनशेत् मा विनश्यतु १६ असाधवो ये अमात्यास्तेभ्यः यथा यथाशास्त्रम् १७ १८। १९। २० सर्वान् लोकांश्च तत्पालानमरांश्च तत्प्रापकान् यज्ञाश्च संगृह्णाति नियच्छतीति तथा तम् विचित्रैर्द्रव्य

आयुःश्रीबलकीर्तीनां तव तात विवर्द्धनम् १४ धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः लोकान्विशोकान्वितरत्यथानंत्यमसंगिनाम् १५ स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः यस्मिन्विनष्टे नृपतिरैश्वर्यादवरोहति १६ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यः प्रजा नृपः रक्षन्यथा बलिं गृह्णन्निह प्रेत्य च मोदते १७ यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः १८ तस्य राज्ञो महाभाग भगवान्भूतभावनः परितुष्यति विश्वात्मा तिष्ठतो निजशासने १९ तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे लोकाः सपाला ह्येतस्मै हरंति बलिमादृताः २० तं सर्वलोकामरयज्ञसंग्रहं त्रयीमयं द्रव्यमयं तपोमयम् यज्ञैर्विचित्रैर्यजतो भवाय ते राजन्स्वदेशाननुरोद्धुमर्हसि २१ यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः स्विष्टाः सुतुष्टाः प्रदिशंति वांछितं तद्धेलनं नार्हसि वीर चेष्टितम् २२॥ यज्ञादिभिः भवाय समृद्ध्ये स्वदेशान् तद्वासिनो जनान् अनुरोद्धुं अनुवर्तितुम् २१ युष्मद्विषये त्वद्देशे हरेः कलाः अंशाः सुराः तेषां सुराणां हेलनं



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वालिशाः अज्ञाः वृत्तिदं अन्नादिप्रदं मां हित्वा २३ । २४ । भर्तृस्नेहो विदूरो येषाम् २५ । २६ देहे भवंति नृपतेः अतो नृप

वेन उवाच वालिशा वत यूयं वा अधर्मे धर्ममानिनः ये वृत्तिदं पतिं हित्वा जारं पतिमुपासते २३ अवजानंत्यमी मूढा नृपरूपिणमीश्वरम् नानुविंदंति ते भद्रमिह लोके परत्र च २४ को यज्ञपुरुषो नाम यत्र वो भक्तिरीदृशी भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम् २५ विष्णुर्विरिंचो गिरिश इंद्रो वायुर्यमो रविः पर्जन्यो धनदः सोमः क्षितिरग्निरपांपतिः २६ एते चान्ये च विबुधाः प्रभवो वरशापयोः देहे भवंति नृपतेः सर्वदेवमयो नृपः २७ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् २८ मैत्रेय उवाच इत्थं विपर्ययमतिः पापीयानुत्पथं गतः अनुनीयमानस्तद्याच्ञां न चक्रे भ्रष्टमंगलः २९ इति तेऽसत्कृतास्तेन द्विजाः पंडितमानिना भग्नायां भव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ३० हन्यतां हन्यतामेष पापः प्रकृतिदारुणः जीवन् जगदसावाशु कुरुते भस्मसाद्ध्रुवम् ३१ ॥ ३१ ॥

ॐ विरेश्वरः इन्द्रः इतरे तद्वशा इति भावः एमः

२७ बलिं च करादिकं अग्रभुक् आराध्यः २८ । २९ तेनासत्कृताः भग्नायां याच्ञायाम् ३० । ३१ ॥ ५ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

३२परिचक्षीतविनिंदेत अशुभंवेनंविनाकृतमताम्राहुः यदनुग्रहविषयःसन् ईदृशमैश्वर्यंयःप्राप्तः ३३पूर्वंगूढम-
न्यवःइदानीरूढमन्यवःहुंकृतैहुंकारैः ३४ स्वाश्रमपदंप्रति ऋषिभिर्गतेगमनेकृतेसति विद्यायोगेनमंत्रसहित-
यायुक्त्याओषधिबलेनपालयामास ३५ पुंवद्भावआर्षःसरस्वत्याःसलिलेआप्लुताइत्यर्थः ३६ तदाताःसानान्वीक्ष्य

नायमर्हत्यसद्वृत्तोनरदेववरासनम् योधियज्ञपतिंविष्णुंविनिंदत्यनपत्रपः ३२॥
कोवैनंपरिचक्षीतवेनमेकमृतेऽशुभम् प्राप्तईदृशमैश्वर्य्यंयदनुग्रहभाजनः३३।
इत्थंव्यवसिताहंतुमृषयोरूढमन्यवः निजघ्नुर्हुंकृतैर्वेनंहतमच्युतनिंदया ३४ ऋ-
षिभिःस्वाश्रमपदंगतेपुत्रकलेवरम् सुनीथापालयामासविद्यायोगेनशोचती३५
एकदामुनयस्तेतुसरस्वत्सलिलाप्लुताः हुत्वाग्नीन्सत्कथाश्चक्रुरुपविष्टाःसरित्तटे
३६वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् अप्यभद्रमनाथायादस्युभ्योनभ-
वेद्भुवः ३७ एवंमृशंतऋषयोधावतांसर्वतोदिशः पांशुःसमुत्थितोभूरिश्चोराणाम-
भिलुंपताम् ३८ तदुपद्रवमाज्ञायलोकस्यवसुलुंपताम्॥ ॐ ॥ ॐ ॥ ॐ ॥

भुवोभद्रंनभवेत् किमित्याहुश्च ३७ एवंमृशंतऋषयःस्थिताःतदाधावतांचोराणांभूरिःपांशुःसमुत्थितः ३८त-
त्तदातेषांलोकस्यधनंलुंपतांजिघांसताम्॥ ॐ ॥ ॐ ॥ ॐ ॥ रामः॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

चोपद्रवमाज्ञाय ३९ तथाचोरप्रायमराजकंहीनसत्वंचजनपदमाज्ञायशक्ताअप्यवारणेदोषदर्शिनोपिलुंपतोलोका
न्नावारयन्नित्यन्वयः ४० शक्तानांक्षत्रियाणां अवारणे दोषइतिकिंवक्तव्यंसमदृगपिशांतोपिब्राह्मणोपियदिदीनानांसमु
पेक्षकोभवेत् तर्हितस्यापिब्रह्मतपः स्रवति ४१। ४२ अतःउपेक्षादोषपरिहारायनांगस्येत्यादिविनिर्मथितस्यमहीपतेरू

भर्त्तर्युपरतेतस्मिन्नन्योन्यंचजिघांसताम् ३९ चोरप्रायंजनपदंहीनसत्वमराजकम् लो
कान्नावारयञ्छक्ता अपितद्दोषदर्शिनः ४० ब्राह्मणः समदृक्शांतोदीनानांसमुपेक्ष
कः स्रवतेब्रह्मतस्यापि भिन्नभाण्डात्पयोयथा ४१ नांगस्यवंशोराजर्षेरेषसंस्थातुमर्ह
ति अमोघवीर्याहिनृपावंशेस्मिन्केशवाश्रयाः ४२ विनिर्मथितस्येवमृषयोविपन्नस्य
महीपतेः ममंथुरूरुंतरसातत्रासीद्बाहुकोनरः ४३ काककृष्णोऽतिह्रस्वांगोह्रस्व
बाहुर्महाहनुः ह्रस्वपान्निम्ननासाग्रोरक्ताक्षस्ताम्रमूर्धजः ४४ तंतुतेवनतंदीनंकिं
करोमीतिवादिनम् निषीदेत्यब्रुवंस्तात सनिषादस्ततोऽभवत् ४५ ॥ रूरुंतरसाममंथुरित्य
न्वयः संस्थातुंनाशंगंतुंयद्वाऋषयएवलुंपतोलोकान्नावारयन् कथंभूताःहुंकारैरेवचैनंनिवारयितुंशक्ताअपिनत
स्मिन्निवारणेतन्मरणादिदोषदर्शिनः नचोदासन् चोरापहृतेदीनोपेक्षायांतपोहानिप्रसंगात् नचात्यंतन्निवार
कंराजानमकुर्वन् अंगवंशस्योच्छेदस्यानर्हत्वात् अतोवेनस्यैवदेहंममंथुरितियोज्यंबाहुकोवामनः ४३ नमेयाहका

कइवकृष्णः महसौहन्वूकपोलप्रांतौयस्यह्रस्वौपादौयस्य ४४। ४५ गिरिकाननंचगोचरआश्रयोनतुपुरादिप्रवेशो येषांतेतत्रहेतुः येनकारणेनासावहरत ततस्तस्यवंश्याः तथाभूताः ४६ ॥ ॥इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धेभा वार्थदीपिकायांचतुर्दशोऽध्यायः१४॥ ॥ततःपंचदशेविप्रैर्मन्थनाद्वेनबाहुतः जातस्यतुपृथोरुक्तमभिषेकार्हणादिक

तस्यवंश्यास्तुनैषादागिरिकाननगोचराः येनाहरज्जायमानोवेनकल्मषमुल्बणम् ४६ ॥इतिश्रीभागवतेमहापुराणेचतुर्थस्कन्धेनैषादोत्पत्तिश्चतुर्दशोऽध्यायः१४॥ मैत्रेयउवाच अथतस्यपुनर्विप्रैरपुत्रस्यमहीपतेः बाहुभ्यांमथ्यमानाभ्यांमिथुनं। समपद्यत १ तद्दृष्ट्वामिथुनंजातमृषयोब्रह्मवादिनः ऊचुःपरमसंतुष्टाविदित्वाभ गवत्कलाम् २ ऋषयऊचुः एषविष्णोर्भगवतःकलाभुवनपालिनी इयंचलक्ष्म्याः। संभूतिःपुरुषस्यानपायिनी ३ अयंतुप्रथमोराज्ञांपुमान्प्रथयितायशः पृथुर्नामम हाराजोभविष्यतिपृथुश्रवाः ४ इयंचवैदेवीसुदतीगुणभूषणभूषणा अर्चिर्नामवरा। रारोहापृथुमेवावरुंधती ५॥ ॥म् १। २ किमूचुरित्यतआह एषइतिचतुर्भिःलक्ष्म्याःसंभूतिःक ला ३ अत्रपः पुमान्सतुमहाराजोभविष्यति ४ सुदतीशोभनदंतवती गुणानांभूषणानांचभूषणरूपा अवरुंधतीभ र्तृत्वेनभजंतीभविष्यति ५॥ ५ ॥ ६ ॥ ६ ॥ २ ॥ ७ ॥ श्रीरामचंद्रः॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अत्रहेतुःएषइति लोकस्यरिरक्षयारिरक्षयिषया ६ स्वःस्त्रियः अप्सरसोनृत्यंतिस्म ७।८ देवैःसहासृत्यआगत्य
वैन्यस्यपृथोः चिन्हैरेखात्मकंचक्रम् ९ अप्रतिहतंरेखांतरैरभिन्नंचक्रंयस्यचिन्हंसपरमेश्वरस्यांशः १० आ।

एषसाक्षाद्धरेरंशोजातोलोकरिरक्षया इयंचतत्पराहिश्रीरनुजज्ञेऽनपायिनी ६॥
श्रीमैत्रेयउवाच प्रशंसंतिस्मतंविप्रागंधर्वप्रवराजगुःमुमुचुःसुमनोधाराःसिद्धा।
नृत्यंतिस्वःस्त्रियः ७ शंखतूर्यमृदंगाद्यानेदुर्दुन्दुभयोदिवि तत्रसर्वउपाजग्मुर्देव
र्षिपितॄणांगणाः ८ ब्रह्माजगद्गुरुर्देवैःसहासृत्यसुरेश्वरैः वैन्यस्यदक्षिणेहस्ते।
दृष्ट्वाचिह्नंगदाभृतः ९ पादयोररविंदंचतंवैमेनेहरेःकलाम् यस्याप्रतिहतंचक्र।
मंशःसपरमेष्ठिनः १० तस्याभिषेकआरब्धोब्राह्मणैर्ब्रह्मवादिभिः आभिषेचनिका
न्यस्मैआजह्रुःसर्वतोजनाः ११ सरित्समुद्रागिरयोनागागावःखगामृगाः द्यौःक्षितिः
सर्वभूतानिसमाजह्रुरुपायनम् १२ सोभिषिक्तोमहाराजःसुवासाःसाध्वलंकृतः।
पत्न्यार्चिषालंकृतयाविरेजेग्निरिवापरः १३ तस्मैजहारधनदोहैमंवीरवरासनम्।
वरुणःसलिलस्रावमातपत्रंशशिप्रभम् १४॥ ॥अभिषेचनिकानि अभिषेकसाधनानि ११।१२।
१३ हैवीरवरासनम् उत्तमासनम् सलिलस्रावोयस्मात् १४॥ १५॥ ६॥ ६॥ ६॥

द्वे बालव्यजने १५ ब्रह्ममयं वर्म कवचम् तत्पत्नी श्रीः श्रियं संपदम् १६ दशचंद्राकाराणि बिंबानि कोशे यस्य तम्
असिं खड्गम् शतचंद्रं चर्म रूपाश्रयं अतिसुंदरम् १७ अजस्य गोश्च शृंगाभ्यां निर्मितं चापम् योगमय्यौ पादस्प-

वायुश्च बालव्यजने धर्मः कीर्त्तिमयीं स्रजम् इंद्रः किरीटमुत्कृष्टं दंडं संयमनं यमः
१५ ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम् हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रि-
यम् १६ दशचंद्रमसिं रुद्रः शतचंद्रं तथांबिका सोमोऽमृतमयानश्वांस्त्वष्टा रूपा-
श्रयं रथम् १७ अग्निराजगवं चापं सूर्यो रश्मिमयानिषून् भूः पादुके योगमय्यौ
द्यौः पुष्पावलिमन्वहम् १८ नाट्यं सुगीतं वादित्रमंतर्द्धानं च खेचराः ऋषयश्चाशिषः-
सत्याः समुद्रः शंखमात्मजम् १९ सिंधवः पर्वता नद्यो रथवीथीर्महात्मनः सू-
तोऽथ मागधो वंदी तं स्तोतुमुपतस्थिरे २० स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रता-
पवान् मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत् २१ पृथुरुवाच भोः सूत हे माग-
धसौम्य वंदिन् लोकेऽधुनास्पष्टगुणस्य मे स्यात् ॥ छ ॥ ६ ॥ छ ॥

र्शमात्रेणाभीष्टदेशप्रापिके १८ नाट्यादिकौशलं खेचराः आत्मजं स्वप्रभवम् १९ तं स्तोतुमुपस्थिताः २० स्ता-
वकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा २१ लोके स्पष्टगुणस्य सतो मे स्तुतिः स्यात् अधुना तु किमाश्रया मे स्तवो ।

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

योज्यताम् अतो वो गिरोऽधुनामयि वितथा माभूवन् यद्वा लोके अधुना असदृशगुणस्य मे किमाश्रयः स्तवः स्यात्
अत एषः क्रियमाणः स्तवः मे मदन्यस्य योज्यताम् नतु मे वितथाभिमानापत्तेरित्यर्थः २२ तस्मात्परोऽक्षे कालांतरे स्व
श्रेष्ठगुणेषु सत्सु अस्माकमुपश्रुतानि यशांसि प्रति स्तोत्रं अलमत्यर्थं करिष्यथ हे अपीच्यवाचः मधुरगिरः सभ्यैः
वीरितावयं त्वामेव स्तुम इति चेत्तत्राह उत्तमश्लोकस्य गुणानुवादे कार्य्ये सति जुगुप्सितमर्वाचीनं न स्तावयंति २३॥
न त्वसंभावितैरेव गुणैरात्मानं जनस्तावयतीति चेत्तत्राह महतां गुणानामात्मनि संपादयितुं शक्तोऽपि असतो गुणान्

किमाश्रयो मे स्तव एष योज्यतां मा मय्यभूवन्वितथा गिरो वः २२ तस्मात्परोक्षेऽस्मदु
पश्रुतान्यलं करिष्यथ स्तोत्रमपीच्यवाचः सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं
न स्तवयंति सभ्याः २३ महद्गुणानात्मनि कर्त्तुमीशः कः स्तावकैः स्तावयतेऽसतोऽ
पि तेऽस्याभविष्यन्निति विप्रलब्धो जनावहासं कुमतिर्न वेद २४ प्रभवो ह्यात्मनः
स्तोत्रं जुगुप्सन्त्यपि विश्रुताः ह्रीमंतः परमोदाराः पौरुषं वा विगर्हितम् २५॥ ८६॥

संभावनामात्रेण कः स्तावयते यद्वा आदावेव सतोऽपि कः स्तावयते स्वत एव प्रख्यातिसिद्धेः अन्यस्तु मिथ्यागुण
स्तुतिश्लाघी मंद इत्याह न इति यद्ययं शास्त्राभ्यासादिकमकरिष्यत् तर्ह्यस्य विद्यादयो गुणा अभविष्यन्निति क्रिया
निष्पत्त्या विप्रलब्धो जनानामवहासं न वेद २४ किंच प्रभवोऽपि विश्रुता अपि ह्रीमंतोऽपि जुगुप्संति वेति दृष्टान्ते यथा
अतिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादि पौरुषं निंदंति तथा उच्चिनामपि स्तुतिं न सहंत इत्यर्थः २५ ॥ २ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वरीमभिरितिदीर्घमार्षभवित्प्रधानश्चायंनिर्देशः वरिष्ठैःकर्मभिरविदिताइत्यर्थः २६ ॥ इतिचतुर्थेटीकायांपंचद
शः १५ ॥ षोडशेसर्वलोकेशैःसत्कृतंभार्ययायुतम् मुनिप्रयुक्ताःसूताद्याःस्तुवंतिस्मेतिवर्ण्यते १ गायकाःसूताद्य

वयंनविदितालोके सूताद्यापिवरीमभिः कर्मभिःकथमात्मानंगाययिष्यामबालवत् २६ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपृथुचरितेपंचदशोऽध्यायः १५ मैत्रेयउवाच इतिब्रुवाणंनृपतिंगायकामुनिचोदिताः तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया १ गायकाऊचुः नालंवयंतेमहिमानुवर्णनेयोदेववर्योऽवततारमायया वेनांगजातस्यचपौरुषाणितेवाचस्पतीनामपिबभ्रमुर्धियः २ अथाप्युदारश्रवसःपृथोर्हरेः कलाऽवतारस्यकथाऽमृतादृताः यथोपदेशंमुनिभिःप्रचोदिताःश्लाघ्यानिकर्माणिवयंवितन्महि ३ एषधर्मभृतांश्रेष्ठोलोकंधर्मेऽनुवर्त्तयन् गोप्ताचधर्मसेतूनांशास्तातत्परिपंथिनाम् ४ एषवैलोकपालानांबिभर्त्येकस्तनौतनूः ॥ ५ ॥

११ नालंनसमर्थाः योभवान् अवतारेषप्यस्याधिक्यमाहुः वेनस्यांगाज्जातस्यतेपौरुषाणित्वत्तिअवि [illegible] नकोनया
ब्रह्मादीनामपिधियोबभ्रमुःकुतःपुनर्वयंतद्वर्णनेसमर्थाःभवेम २ अथापियथावद्वर्णयितुंअशक्ताअपिक
ब्रह्मादीनामपिधियोबभ्रमुःकुतःपुनर्वयंतद्वर्णनेसमर्थाःभवेम २ अथापियथावद्वर्णयितुंअशक्ताअपिकथा
ऽमृतेसादराःमुनिभिरुपदेशंयोगबलेनत्वद्दिप्रकाशनंतदनतिक्रम्यवितन्महिविस्तारयामः ३ ४ ननोस्वदेहे

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यथाभागंपालनपोषणानुरंजनादिकार्यानुसारेणयज्ञादिप्रवर्त्तनेनस्वर्गस्यहितंवृष्ट्यादिनाचभूर्लोकस्यहितं- यथाभवतितथा ५ सूर्यादितनुधारणमेवाहाष्टभिः वसुधनंकरादानकाले आदत्तेदुर्भिक्षादिकालेविमुंचतिच अ- ष्टौमासान्सूर्योयथावसुजलमादत्तेविमुंचतिवर्षासुतद्वत् ६ मस्तकेपादेनाक्रमतामप्यार्त्तानांभूतानामतिक्रमंस- हिष्यते क्षितेर्वृत्तिःसर्वसहनंसावृत्तिर्यस्यास्तिसतथा ७ देवेअवर्षत्येषकृच्छ्रंगताःप्राणायासांताःप्रजाःस्वयंवृष्टिं

कालेकालेयथाभागंलोकयोरुभयोर्हितम् ५ वसुकालउपादत्तेकालेचायंविमुं- चति समःसर्वेषुभूतेषुप्रतपन्सूर्यवद्विभुः ६ तितिक्षत्यक्रमंवैन्यउपर्याक्रमताम- पि भूतानांकरुणःशश्वदार्त्तानांक्षितिवृत्तिमान् ७ देवेवर्षत्यसौदेवोनरदेववपुर्ह- रिः कृच्छ्रप्राणाःप्रजाह्येषरक्षिष्यत्यंजसेंद्रवत् ८ आप्याययत्यसौलोकंवदनामृ- तमूर्त्तिना सानुरागावलोकेनविशदस्मितचारुणा ९ अव्यक्तवर्त्मैषनिगूढका- र्योगंभीरवेधाउपगुप्तवित्तः ॥

कृत्वारक्षिष्यति अत्रहेतुःअसौनरदेववपुर्हरिरिति ८ वदनमेवा- मृतमूर्त्तिश्चंद्रस्तेनसानुरागोऽवलोकोयस्मिन् विशदंस्मितंतेनचारुणाअत्रक्वचिद्वर्त्तमाननिर्देशोवर्त्तमानसा- मीप्येवर्त्तमानवद्वेति भूतनिर्देशश्च आशंसायांभूतवच्चेतिद्रष्टव्यः ९ नव्यक्तंवर्त्मप्रवेशनिर्गममार्गोयस्यनिगूढं निष्पत्तेः पूर्वंअविज्ञातंकार्य्यंयस्यतच्चकार्य्यम् गंभीरंकिमर्थमेतत्कृतमित्यन्यैरज्ञानाभिप्रायंविधत्तइति ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तथाउपगुप्तंस्फुरत्स्मितिंवित्तंयस्यअनंतमाहात्म्यश्चासौगुणानामेकंधामविष्णुर्यस्मिन्अनंतमाहात्म्योपेतागुणाएवए
कंधामस्थानंयस्येतिवा संवृतात्मासंयतमूर्त्तिःसमुद्रचरत्वेनवरुणस्याप्येतेगुणाद्रष्टव्याः १० दुरासदःशत्रोर्मनसापि।
प्राप्तुमशक्यःदुर्विषहःशत्रुभिःसोढुमशक्यः विदूरवत् पौरुषेणअभिभवितुमशक्यःवेनएवअरणिस्तस्मादुत्थितः।
११ चारणैर्गुप्तभृत्यैःपश्यन्नपिस्वस्तुतिनिंदादीन्प्रतिउदासीनइववर्त्तिष्यतेयथादेहिनामध्यक्षोऽविकृतआत्मभू

**अनंतमाहात्म्यगुणैकधामा पृथुःप्रचेताइवसंवृतात्मा १० दुरासदोदुर्विषहआ।**
**सन्नोऽपिविदूरवत् नैवाभिभवितुंशक्योवेनारण्युत्थितोनलः ११ अंतर्बहिश्चभू।**
**तानांपश्यन्कर्माणिचारणैःउदासीनइवाध्यक्षोवायुरात्मेवदेहिनाम् १२ नादंड्यंदंड**
**यत्येषसुतमात्मद्विषामपि दंडयत्यात्मजमपिदंड्यंधर्मपथेस्थितः १३ अस्याप्रतिह**
**तंचक्रंपृथोरामानसाचलात् वर्त्ततेभगवानर्कोयावत्तपतिगोगणैः १४ रंजयिष्य**
**तियल्लोकमयमात्मविचेष्टितैःअथामुमाहूराजानंमनोरंजनकैःप्रजाः १५ ॥२॥**

तोवायुःसूत्रात्मातद्वत् १२ आत्मद्विषांसुतमिति सुतग्रहणंस्वात्मजसाम्यार्थम् धर्मपथेयमस्यवृत्तेस्थितः।
१३ चक्रंआज्ञासेनावारथस्यवाचक्रंमानसाचलमभिव्याप्यवर्त्ततेकिंपर्यंतमित्यतआह अर्कोरश्मिगणैर्या
वत्तपतितद्वत् १४ यद्यस्माद्रंजयिष्यतिअथतस्मान्मनोरंजनैर्हेतुभिरमुंराजानमाहुः मनोरंजनकैरितिचेष्टि



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२६
भा०च०
टी०
६०

१६। मातरीव भक्तिर्भजनं यस्य आत्मनो देहस्यार्द्ध इव पत्न्यां प्रीतिमान् १७ नंदिः सुखं वर्धयतीति तथा मुक्तसंगेषु प्रकृष्टः संगो यस्य दंडपाणिरिवेत्यपराधानुपेक्षणमुच्यते नादंड्यमित्यत्र तु पक्षपाताभावउक्तः १८ अयं त्विति तु

दृढव्रतः सत्यसंधो ब्रह्मण्यो वृद्धसेवकः शरण्यः सर्वभूतानां मानदो दीनवत्सलः ॥ १६ मातृभक्तिः परस्त्रीषु पत्न्यामर्ध इवात्मनः प्रजासु पितृवत्स्निग्धः किंकरो ब्रह्मवादिनाम् १७ देहिनामात्मवत्प्रेष्ठः सुहृदां नंदिवर्धनः मुक्तसंगप्रसंगोयं दंडपाणिरसाधुषु १८ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयावतीर्णः यस्मिन्नविद्यारचितं निरर्थकं पश्यंति नानात्वमपि प्रतीतम् १९ अयं भुवो मंडलमोदयाद्रेर्गोप्तैकवीरो नरदेवनाथः आस्थाय जैत्रं रथमात्तचापः पर्यस्यते दक्षिणतो यथार्कः २० अस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यंति सलोकपालाः मंस्यंत एषां स्त्रिय आदिराजं चक्रायुधं तद्यश उद्धरन्त्यः २१ अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम् ॥

ज्ञशब्देन निरूपमत्वं दर्शयति कोऽसावात्मानमाह यस्मिन्प्रतीतमपि नानात्वमर्थशून्यं पश्यंति १९ आउदयाद्रेः स्तत्सर्यंतं गोप्ता गोपायिष्यति तदर्थं पर्यस्यते पर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः २० अस्मै तदा प्रदक्षिणां कुर्वते मंस्यंते ज्ञास्यंति तस्य यश उच्चरंत्यः उदाहरंत्यः कीर्तयन्त्यः २१ इंद्र इवाग्नीन्

स्यः
६०

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विभिंदन् २२ लांगूलमुन्नमय्ययथामृगेंद्रश्चरतितथाधनुर्विस्फूर्जयन् यदाक्ष्मामचरत् २३ यत्रप्रादुरभावित्रि

योलीलयाऽद्रीन्स्वशरासकोट्याभिंदन्समांगामकरोद्यथेंद्रः २२ विस्फूर्जयन्नाजगवं धनुःस्वयदाचरत्क्ष्मामविषह्यमाजौ तदानिलिल्युर्दिशिदिश्यसंतोलांगूलमुद्यम्य यथामृगेंद्रः २३ एषोऽश्वमेधान्शतमाजहार सरस्वतीप्रादुरभावियत्र अहारषीद्यस्यहयंपुरंदरः शतक्रतुश्चरमेवर्त्तमाने २४ एषःस्वसद्मोपवनेसमेत्यसनत्कुमारंभगवंतमेकम् आराध्यभक्त्यालभतामलंतज्ज्ञानंयतोब्रह्मपरंविदंति॥ २५ तत्रतत्रगिरस्तास्ताइतिविश्रुतविक्रमः श्रोष्यत्यात्माश्रितागाथाःपृथुःपृथुपराक्रमः २६ दिशोविजित्याप्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः सुरासुरेंद्रैरुपगीयमानमहाऽनुभावोभवितापतिर्भुवः २७ ॥ इतिश्रीभागवतेमहापुराणे चतुर्थस्कंधेपृथुचरित्रेषोडशोऽध्यायः १६॥

ऽऽ इरभूत्कर्मकर्त्तरिचिण् तन्नाहार्षीत् हरणंकरिष्यतीत्यर्थः २४। २५ विश्रुताविक्रमायस्यगाथाःप्रबंधान् आत्माश्रिताः विष्वाश्रिताः २६ उपगीयमानोमहाऽनु



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ततःसप्तदशेलोकक्षुधाःप्रशमयन्पृथुःग्रस्तबीजांमहींहंतुंयतोभीस्तातयास्तुतः १ छंदयामाससंतोषितवान्। भृत्यान् अमात्यान्पुरोधसःपुरोहितांश्चश्रेणीःतैलिकतांबूलिकादीन्पौरविशेषान्प्रकृतीःनियोगिनः २ दोहनंपा

मैत्रेयउवाच एवंसभगवान्वैन्यःख्यापितोगुणकर्मभिः छंदयामासतान्कामैः प्रतिपूज्याभिनंद्यच १ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः पौराञ्जानपदाञ्श्रेणीःप्रकृतीःसमपूजयत् २ विदुरउवाच कस्माद्दधारगोरूपंधरित्रीबहुरूपिणी यांदुदोहपृथुस्तत्रकोवत्सोदोहनंचकिम् ३ प्रकृत्याविषमादेवीकृतातेनसमाकथम् तस्यमेध्यंहयंदेवःकस्यहेतोरपाहरत् ४ सनत्कुमाराद्भगवतोब्रह्मन्ब्रह्मविदुत्तमात् लब्ध्वाज्ञानंसविज्ञानंराजर्षिःकांगतिंगतः ५ यच्चान्यदपिकृष्णस्यभवान्भगवतःप्रभोः श्रवःसुश्रवसःपुण्यंपूर्वदेहकृताश्रयम् ६ भक्तायमेऽनुरक्तायतवचाधोक्षजस्यच वक्तुमर्हतियोदुह्यद्वैन्यरूपेणगामिमाम् ७ सूतउवाच चोदितोविदुरेणैवंवासुदेवकथाम्प्रति प्रशस्यतंप्रीतमनामैत्रेयःप्रत्यभाषत ८ मैत्रेयउवा

त्रं ३ मेध्यंयज्ञार्हम् ४ सविज्ञानंअपरोक्षज्ञानसहितम् ५ पूर्वदेहःपृथ्ववतारःतत्कथाश्रयंसुश्रवोयस्य ६ अदु



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

जनतायास्त्वंपालइत्यामंत्रितोनियुक्तः तदानिरन्नेक्षितितलेसतिक्षुधाक्षामाःक्षीणादेहायासान्ताः प्रजाः एत्यपतिंपृथुमब्रुवन् ९ जाठरेणाग्निनाऽभितप्ताः यःसाधितः विप्रैर्मथनेनसंपादितः तंत्वांशरणंयाताः १० तत्तस्मान्नोऽस्माकंअ

यदाऽभिषिक्तःपृथुरंगविप्रैरामंत्रितोजनतायाश्चपालः प्रजानिरन्नेक्षितिपृष्ठए
त्यक्षुत्क्षामदेहाःपतिमभ्यवोचन् ९ वयंराजञ्जाठरेणाभितप्तायथाऽग्निनाकोटर
स्थेनवृक्षाः त्वामद्ययाताःशरणंशरण्यंयःसाधितोवृत्तिकरःपतिर्नः १० तन्नोभवानी
हतुरातवेऽन्नंक्षुधाऽर्दितानांनरदेवदेव यावन्ननंक्ष्यामहउज्झितोर्ज्जावार्त्तापतिस्त्वं
किललोकपालः ११ मैत्रेयउवाच पृथुःप्रजानांकरुणंनिशम्यपरिदेवितम् दीर्घंद
ध्यौकुरुश्रेष्ठनिमित्तंसोऽन्वपद्यत १२ इतिव्यवसितोबुद्ध्याप्रगृहीतशरासनः संदधे
विशिखंभूमेःक्रुद्धस्त्रिपुरहायथा १३ प्रवेपमानाधरणीनिशाम्योदायुधंचतम् गौः
सत्यपाद्रवद्भीतामृगीवमृगयुर्द्रुता १४ तामन्वधावत्तद्वैन्यःकुपितेत्यरुणेक्षणः शरं
धनुषिसंधाययत्रयत्रपलायते ॥ १५ ॥

न्नंरातवेदातुंईहतुईहतांयत्नंकरोतुउज्झितोर्जारुत्सृक्तान्नाःसत्यःवार्त्तायाःजीविकायाःपतिः ११ परिदेवितंविलापंनिमित्तंहेतुंअन्वपद्यतज्ञातवान् १२ पृथिव्याओषधिवीजानिग्रस्तानीतिव्यवसितोनिश्चितवान्सन् १३ मृगयुनाद्रुताअनुगनामृगीव १४ । १५ ॥ छ ॥ ९ ॥ सम:

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

रोदसी द्यावापृथिव्यौ तयोरंतरमन्तरीक्षंच अनुपश्चात उद्यतं आयुधं येन तम् १६। १७ यो धर्मज्ञ इति मतः स भवान् यो मां कथमहनिष्यत् हनिष्यति १९। २० अजरां दृढां धास्यसि धारयिष्यसि २१ बर्हिषि यज्ञे या भवतीति रेवतारूपे

सा दिशो विदिशो देवी रोदसी चान्तरं तयोः धावती तत्र तत्रैनं ददर्शानूद्यतायुधम् १६ लोके नाविंदत त्राणं वैन्यान्मृत्योरिव प्रजाः त्रस्ता तदा निववृते हृदयेन विदूयता॥ १७ उवाच च महाभाग धर्मज्ञापन्नवत्सल त्राहि मामपि भूतानां पालनेऽवस्थितो भवान् १८ स त्वं जिघांससे कस्माद्दीनामकृतकिल्बिषाम् अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः १९ प्रहरंति न वै स्त्रीषु कृतागःस्वपि जंतवः किमुत त्वद्विधा राजन् करुणा दीनवत्सलाः २० मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम् आत्मानं च प्रजाश्चेमाः कथमंभसि धास्यसि २१ पृथुरुवाच वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम् भागं बर्हिषि या वृङ्क्ते न तनोति च नो वसु २२ यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः तस्यामेवं हि दुष्टायां दंडो नात्र न शस्यते २३॥ वृणक्ति भागं वृङ्क्ते भजते वसु धान्यादिकम् २२ गोरूपेण तु यवसं तृणं जग्धि अत्ति सर्वः पयस्तु नैव दोग्धि दुग्धं न स्रवति अत्रास्मिन्नपराधे २३॥ २३॥ छ॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

आत्मनि देहे रुद्धानि २४ मद्बधे सर्वथाऽन्नं न स्यादिति चेत्तत आह अमूषां प्रजानां मेदसा मांसेन २५ यदुक्तं योषां कथं ह-
निष्यतीति तत्राह पुमानिति तस्य वधोऽवध एव २६ यच्चोक्तं कथं मं भसि विधास्यसीति तत्राह त्वामिति तिलशस्तिल-
प्रमाणानि खण्डानीत्येवंभूतामवस्थां नीत्वा २७ मन्युमयीं मूर्त्तिं बिभ्रतं कृतान्ततुल्यत्वमुच्यते न तु कृतान्तस्य मन्युमयी

त्वं खल्वोषधिबीजानि प्राक्सृष्टानि स्वयंभुवा न मुंचस्यात्मरुद्धानि मामवज्ञाय मंदधीः॥
२४ अमूषां क्षुत्परीतानामार्त्तानां परिदेवितम् शमयिष्यामि मद्बाणैर्भिन्नायास्तव मे-
दसा २५ पुमान्योषिदुत क्लीब आत्मसंभावनोऽधमः भूतेषु निरनुक्रोशो नृपाणां त-
द्वधोऽवधः २६ त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः आत्मयोगबलेनेमा धार-
यिष्याम्यहं प्रजाः २७ एवं मन्युमयीं मूर्त्तिं कृतांतमिव बिभ्रतम् प्रणता प्रांजलिः
प्राह मही संजातवेपथुः २८ धरोवाच नमः परस्मै पुरुषाय मायया विन्यस्तनानात-
नवे गुणात्मने नमः स्वरूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये २९ ॥ ९

मूर्त्तिरिति २८ शुद्धसत्वतनुं देवमकस्माद् तिदारुणं वीक्ष्यमाणा पृथ्वी तुष्टाव करुणोक्तिभिः मायया विन्यस्ता रचित-
नानाघोरादितनवो येन गुणात्मने गुणमयत्वेन प्रतीयमानाय वस्तुतस्तु निर्धूता निरस्ताः द्रव्यक्रियाकारकेषु अधि-
भूताध्यात्माधिदैवेषु बिभ्रमो अहंकारस्तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिन् तस्मै २९ ॥ २९ ॥ रामः ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अहोसर्वजीवाश्रयत्वेनदृष्टांमांकथंहंतुंप्रवर्त्ततइत्याहयेनविधात्राआत्मनांजीवानांआयतनमहंनिर्मितायतोय स्यांमयिगुणसर्गस्यचतुर्विधभूतग्रामस्यसंग्रहोधारणंस्वराट्स्वतंत्रः ३० सृष्टिसंहारकर्त्तृकोऽहमेवेतिचेत् तथा पिप्रजापालनेप्रवृत्तस्यमद्वधोऽनुचितएवेत्याह यएतदिति आत्माश्रययाजीवविषयिण्या ३१ अतोदुर्ज्ञेयमीश्वरचे

येनाहमात्मायतनंविनिर्मिताधात्रायतोऽयंगुणसर्गसंग्रहः सएवमांहंतुमुदायुधस्स्व राडुपस्थितोऽन्यंशरणंकिमाश्रये ३० यएतदादावसृजच्चराचरंस्वमाययात्माश्रयया ऽवितर्क्यया तयैवसोयंकिलगोप्तुमुद्यतःकथंनुमांधर्मपरोजिघांसति ३१ नूनंवते शस्यसमीहितंजनैस्तन्माययादुर्जययाऽकृतात्मभिः नलक्ष्यतेयस्त्वकरोदकारय द्योऽनेकएकःपरतश्चईश्वरः ३२ सर्गादियोऽस्यानुरुणद्धिशक्तिभिर्द्रव्यक्रियाकार कचेतनात्मभिः तस्मैसमुन्नद्धनिरुद्धशक्तयेनमःपरस्मैपुरुषायवेधसे ३३ सवैभ वानात्मविनिर्मितंजगत्भूतेंद्रियांतःकरणात्मकंविभो॥ ष्टितमित्याह नूनमिति अकृता त्मभिःविक्षिप्तचित्तैःयईश्वरःस्वतंत्रःअकरोत्ब्रह्माणंपरतइतितेनब्रह्मणाचराचरमकारयत् यश्चस्वतएकः परतोमाययाअनेकः ३२ तस्मादचिंत्यशक्तयेकेवलंनमइत्याह सर्गादिजन्मस्थितिभंगंअस्यजगतःअनुरुणद्धिअ नुवर्त्ततेकरोतिद्रव्याणिमहाभूतानिक्रियाइंद्रियाणिकारकादेवाः चेतनाबुद्धिःआत्माअहंकारःतैःस्वशक्तिरूपैःस

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मांरसातलादुद्धृत्यइदानींप्रजारक्षणेप्रवृत्तस्यमद्रोधोनयुक्तइतिसकरुणमाहद्वाभ्यांहेअजयःसृष्टवान्सएवभवा
न्स्वनिर्मितंचराचरंजगत्सम्यक्स्थापयितुंआदिसूकरःसन्मामभ्युज्जहार ३४ सएवधराधरोवराहोद्यअपामु
पस्थेउपरिमयिनावि आधारभूतायामवस्थिताःप्रजाःरक्षितुमिच्छुःवीरमूर्त्तिःपृथुरूपःसमभूत्सएवंभूतःसत्वंपय
सिनिमित्तेमांजिघांससीतिविचित्रमित्यर्थः ३५ तस्मादीश्वरचेष्टितंदुर्ज्ञेयमितिकैमुत्यन्यायेनउपसंहरतिनूनं

संस्थापयिष्यन्नजमांरसातलादभ्युज्जहारांभसआदिसूकरः ३४ अपामुपस्थेम
यिनाव्यवस्थिताःप्रजाभवानद्यरिरक्षिषुःकिल सवीरमूर्त्तिःसमभूद्धराधरो
योमांपयस्युग्रशरोजिघांससि ३५ नूनंजनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्ग
मायया नज्ञायतेमोहितचित्तवर्त्मभिस्ते नमोवीरयशस्करेभ्यः ३६ ॥ इतिश्रीभा
ग० च० पृथुविजयेधरित्रीनिग्रहःसप्तदशोऽध्यायः १७ मैत्रेयउवाच इत्थंपृथु
मभिष्टुय रुषाप्रस्फुरिताधरम् पुनराहावनिर्भीतासंस्तभ्यात्मानमात्मना १ ॥ ई

मिति तस्येश्वरस्यगुणसर्गरूपयामाययामोहितंचित्तमेववर्त्मयेषांमोहितानिचित्तवर्त्मानियेषामितिवानैर्ज
नैरीश्वराणांहरिभक्तानामेवतावदीहितंनज्ञायतेकिंपुनस्तस्यपरमेश्वरस्य अतएवपरमेश्वरवत्तेभ्योपिनमएव
केवलंवीराणांजितेंद्रियाणांयशःकुर्वन्तियेतेभ्यःयथावीराणांयशोवर्धततथाचेष्टतांनतुयथेष्टमितिभावः ३६ ॥ इ
तिचतुर्थेटीकायांसप्तदशः १७ ॥ अष्टादशेमहीवाक्याद्वत्सपात्रादिभेदतः पृथ्वादिभिस्तुसादुग्धास्वंस्वंदुग्धमितीर्यते १ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

१८
भा०च०
टी०
६७

हेअभिभोप्रभोयद्वा भोदेवश्रनिश्रभयं यथाभवत्येवंमन्युंसंनियच्छ श्रावितंविज्ञापितंनमद्वाक्येअनादरःकर्त्तव्यइत्याह
बुधोहिसर्वतःसारमादत्ते २ मयिजीर्णाश्रोषधिरूपायेनगृहाणेतिवक्तुमुपायेनसर्वंसिद्ध्यतिनान्यथेत्याह अस्मिन्नि
तित्रिभिः पुंसांश्रेयसःपुरुषार्थस्यप्रसिद्धयेअस्मिंल्लोकेकृष्यादयः अमुष्मिंश्चलोकेअग्निहोत्रादयोयोगाउपायादृष्टाः

धरोवाच संनियच्छाभिभोमन्युंनिबोधश्रावितंचमे सर्वतःसारमादत्तेयथामधुक
रोबुधः २ अस्मिन्लोकेऽथवामुष्मिन्मुनिभिस्तत्त्वदर्शिभिः दृष्टायोगाःप्रयुक्ताश्चपुं
सांश्रेयःप्रसिद्धये ३ तानातिष्ठतियःसम्यगुपायान्पूर्वदर्शितान् अवरःश्रद्धयोपेतः
उपायान्विंदतेंजसा ४ ताननादृत्ययोऽविद्वानर्थानारभतेस्वयम् तस्यव्यभिचरंत्य
र्थाआरब्धाश्चपुनःपुनः ५ पुरासृष्टा ह्योषधयोब्रह्मणायाविशांपते भुज्यमानाम
यादृष्टाभवद्भिरधृतव्रतैः ६ अपालितानादृताचभवद्भिर्लोकपालकैः चोरीभूतेऽ
थलोकेऽहंयज्ञार्थेऽग्रसमोषधीः ७ ॥ ७ ॥

प्रयुक्ताअनुष्ठिताश्च ३ पूर्वैर्दर्शितान् अ
वरोऽर्वाचीनः ४ अविद्वान् विद्वानपीतिवा व्यभिचरंतिनसिध्यंति ५ सहेतुकमुपायमाह पुरेतिषड्भिः भवद्भिरिति
राजसामान्याभिप्रायेणवेनादिभिरितिवा ६ अपालिताचौराद्यनिवारणात् अनादृताचयज्ञादिप्रवर्त्तनाऽभावात् य
ज्ञार्थेअग्रसं्क्षि लिततवतीअन्यथाऽधृतव्रतैर्भुक्तानप्ररोक्ष्यंतेनतश्चयज्ञादयोनसिद्ध्येरन्नितिभावः ७ ॥ ७ ॥

एमः
६४

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

क्षीणाःजीर्णाः ९ वत्सं स्वकुलेमुख्यंदोहनंदोहपात्रम् दोग्धारंचोपकल्पयधोक्ष्येऽहंपूरयिष्यामि ६ भूतानामभी। प्सितमन्नंऊर्जस्वत्बलप्रदम् १० अपगतेऽपिवर्षतौयथामेसर्वतोवर्तेत ११ । १२ प्रसङ्गादर्थान्तरमाह तथेति

नूनंतावीरुधःक्षीणाःमयिकालेनभूयसा तत्रदृष्टेनयोगेनभवानादातुमर्हति॥ ९ वत्संकल्पयमेवीरयेनाहंवत्सलातव धोक्ष्येक्षीरमयान्कामाननुरूपंचदोहनम् ६ दोग्धारंचमहाबाहोभूतानांभूतभावन अन्नमीप्सितमूर्जस्वत्भगवान् वांछतेयदि १० समांचकुरुमांराजन्देववृष्टंयथापयः अपर्त्तावपिभद्रन्तेउपावर्त्तेतमेविभो ११ इतिप्रियंहितंवाक्यंभुवआदायभूपतिः वत्संकृत्वामनुंपाणावदुहत्सकलौषधीः १२ तथापरेचसर्वत्रसारमाददतेबुधाः ततोऽन्येचयथाकामंदुदुहुःपृथुभाविताम् १३ ऋषयोदुदुहुर्देवीमिंद्रियेष्वथसत्तम वत्संबृहस्पतिंकृत्वापयश्छंदोमयंशुचि १४॥

१३ यथापृथुःएवंसर्वत्रवाकेयपरेऽपिसारमा ददते प्रस्तुतमनुवर्त्तयति ततोऽन्येचऋष्यादयःपंचदशदुदुहुःपृथुनाभावितांवशीकृताम् १३ देवींपृथ्वींवाङ्मनःश्रवणैर्वेदग्रहणादिंद्रियाणांपात्रत्वम् १४॥ १४ ॥ ६ ॥ ६ ॥ श्रीरामः ॥ श्रीराम

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सोमममृतंवीर्य्यंमनःशक्तिंओजःइंद्रियशक्तिंबलंदेहशक्तिंचनदेवपयः१५सुरामासवंचनालादिमद्यम्१६
मधुवाङ्माधुर्य्यंसौभगंसौंदर्यंतत्सहितम्१७ कव्यंपितॄणामन्नंआमपात्रेऽपक्वेमृन्मयेअधुक्षतदुदुहुः१८ संक-
ल्पनामयीम् अणिमादिसिद्धिंयेविद्याधरादयस्तेचतमेववत्संप्रकल्प्यनभस्येवपात्रेखेचरत्वादिरूपांविद्यांदुदुहुः१९

कृत्वावत्संसुरगणाइंद्रंसोममदूदुहन् हिरण्मयेनपात्रेणवीर्यमोजोबलंपयः १५ दै-
तेयादानवावत्संप्रल्हादमसुरर्षभम् विधायादूदुहन्क्षीरमयःपात्रेसुरासवम् १६।
गंधर्वाप्सरसोऽधुक्षन्पात्रेपद्ममयेपयः वत्संविश्वावसुंकृत्वागांधर्वंमधुसौभगम्।
१७वत्सेनपितरोऽर्यम्णाकव्यंक्षीरमधुक्षत आमपात्रेमहाभागाःश्रद्धयाश्राद्धदेवताः
१८ प्रकल्प्यवत्संकपिलंसिद्धाःसंकल्पनामयीम् सिद्धिंनभसिविद्यांचयेचविद्या
धरादयः१९ अन्येचमायिनोमायामंतर्धानाद्भुतात्मनाम् मयंप्रकल्प्यवत्संतेदुदु
हुर्धारणामयीम् २० यक्षरक्षांसिभूतानिपिशाचाःपिशिताशनाः भूतेशवत्सादुदुहुः
कपालेक्षतजासवम् २१ तथाऽहयोदंदशूकाःसर्पानागाश्चतक्षकम्। विधायवत्संदुदु

अन्येचविपु
रुषादयःअंतर्धानेनाद्भुतात्मनांसंबंधिनीमायांधारणामयींसंकल्पमात्रप्रभवाम्२० भूतेशोरुद्रःसएववत्सोयेषांक्ष
तजंरुधिरंतदेवासवम्२१ अहयोनिष्फणाःदंदशूकावृश्चिकादयःसर्पाःसफणाःतएवकद्रूसंततिजानागाःबिलपात्रे

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पवसं तृणं गोवृषं रुद्रवाहनं वृषं रुद्रवाहनं वृषभं मृगेंद्रेणेत्युत्तरेणान्वयः २३ क्रव्यं मांसं चरं कीटादि अचरं फला॥ दि २४। २५ अनुक्तसर्वसंग्रहार्थमाह सर्वेइति स्वजातौ यो मुख्यस्तेन वत्सेन २६ उपसंहरति एवमिति स्वन्नं अभीष्ट

पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम्। अरण्यपात्रे चाधुक्षन्मृगेंद्रेण च दंष्ट्रिणः २३।
क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः स्वे कलेवरे। सुपर्णवत्सा विहगाश्चरं चाचरमेव च २४।
वटवत्सा वनस्पतयः पृथग्रसमयं पयः। गिरयो हिमवद्वत्सा नानाधातून्स्वसानु॥
नुषु २५ सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः। सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभा
विताम् २६ एवं पृथ्वादयः पृथ्वीमन्नादाः स्वन्नमात्मनः। दोहवत्सादिभेदेन क्षीरभेदं कु
रूद्वह २७ ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः। दुहितृत्वे चकारेमां प्रेम्णा दुहितृ
वत्सलः २८ चूर्णयन्स्वधनुःकोट्या गिरिकूटानि राजराट्। भूमंडलमिदं वैन्यः प्रायश्च
क्रे समं विभुः २९ अथास्मिन्भगवान्वैन्यः प्रजानां वृत्तिदः पिता। निवासान्कल्पयांच॥
चक्रे तत्र तत्र यथार्हतः ३० ग्रामान्पुरः पत्तनानि दुर्गाणि विविधानि च॥ ॥ मन्वंतमेवक्षी

रभेदं दुदुहुः दोहं पात्रम् २७ इमां पृथ्वीम् २८ धनुषोऽग्रेण गिरिशृंगाणि चूर्णयन् राजराट् राज्ञां राजा सर्वेषामाजीविका

दानात् २९। ३० ग्रामा हट्टादिशून्याः पुरो हट्टादिमत्यः॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

नाएवमहत्यः पत्तनानि दुर्गाणि विविधानि यथाह बृहस्पतिः औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथेति घोषान् आभी
राणां निवासान् व्रजान् गवां निवासान् शिबिरं सेनानिवासस्थानं तत्सहितान् आकरान् स्वर्णादिस्थानानि खेटाः कर्ष
कग्रामाः खर्वटाः पर्वतप्रांतग्रामाश्च ३१। ३२ ॥ इति चतुर्थे टीकायामष्टादशः १८ ॥ ऊनविंशेऽश्वमेधांगहयापहरणा
त्पृथोः इंद्रहंतुं प्रवृत्तस्य धात्रा वारणमुच्यते १ हयमेधशतेन निमित्तेन अदीक्षत दीक्षितोऽभूत् शतनाश्वमेधसंकल्प

घोषान्व्रजान्सशिबिरानाकरान्खेटखर्वटान् ३१ प्राक्पृथोरिह नैवैषा पुरग्रामादिकल्पना यथासुखं वसंतिस्म तत्रतत्राकुतोभयाः ३२ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कंधे पृथुविजयेऽष्टादशोऽध्यायः १८ ॥ मैत्रेय उवाच अथादीक्षत राजा तु हयमेधशतेन सः ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती १ तदभिप्रेत्य भगवान्कर्मातिशयमात्मनः शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम् २ यत्र यज्ञपतिः साक्षात् भगवान्हरिरीश्वरः अन्वभूयत सर्वात्मा सर्वलोकगुरुः प्रभुः ३ ॥ ३ ॥ ३ ॥

मकरोत् इत्यर्थः ब्रह्मावर्ते सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं तद्देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते १ आत्मनः स्व
स्य कर्म अतिशेते इत्यतिशयं अभिप्रेत्य ज्ञात्वा तदिति तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे २ अतिशयमेव दर्शय
ति यत्रेति सप्तभिः साक्षादन्वभूयत प्रत्यक्षेणादृश्यत ३ ॥ ३ ॥ ३ ॥ ६ ॥ ६ ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

।४। सिद्धादयश्च तंहरिमन्वीयुरित्युत्तरेणान्वयः ५। ६ धर्मदुघा हविर्दोग्ध्री कामधेनुः सती ७ ऊहुः वहंतिस्म सर्वर
सान्द्राक्षाद्राक्षादिरसान् क्षीरं च दधि च अन्नं च पाकादि गोरसो घृतं तक्रं च तांश्च भूरीणि विस्तृतानि वर्ष्माणि शरी

अन्वितो ब्रह्मशर्वाभ्यां लोकपालैः सहानुगैः उपगीयमानो गंधर्वैर्मुनिभिश्चाप्सरो
गणैः ४ सिद्धविद्याधरादैत्यादानवागुह्यकादयः सुनंदनंदप्रमुखाः पार्षदप्रव
राहरेः ५ कपिलोनारदोदत्तोयोगेशाः सनकादयः तमन्वीयुर्भागवतायेचतत्से
वनोत्सुकाः ६ यत्रधर्मदुघाभूमिः सर्वकामदुघासती दोग्धिस्माभीप्सितानर्थान्य
जमानस्यभारत ७ ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान् तरवोभूरिवर्ष्माणः
प्रासूयंतमधुच्युतः ८ सिंधवोरत्ननिकरान्गिरयोऽन्नंचतुर्विधम् उपायनमुपा
जह्रुः सर्वेलोकाः सपालकाः ९ इतिचाधोक्षजेशस्यपृथोस्तुपरमोदयम् असू
यन्भगवानिंद्रः प्रतिघातमचीकरत् १० चरमेणाश्वमेधेनयजमानेयजुष्पतिम् ॥११

राणि येषां ते फलादि प्रासूयंत मधुच्युतो मधुस्राविणः संतः ८ चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ९ अधोक्ष
जईशो नाथो यस्य परम उदयोऽभिवृद्धिर्यस्मिन् तत्कर्म असूयन् असहमानः प्रतिघातं विघ्नं चकारेत्यर्थः १० यज

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भा॰ च॰ टी॰ ६७

न्नुष्यति विष्णुं यजमाने सति स्पर्द्धमानइंद्रस्तिरोहितः सन्नपहृतवान् ११ त्वरमाणं धावंतं आमुक्तः प्रतिमुक्तश्च
पिनद्धश्चापिनद्धवत् सन्नद्धो वर्मितः सज्ज इत्यमरसिंहः पाखण्डवेषं कवचमिव गृहीतवंतमित्यर्थः अधर्मे ध

वैन्ययज्ञपशुंस्पर्द्धन्नपोवाह तिरोहितः ११ तमत्रिर्भगवानैक्षत्त्वरमाणंविहायसा
आमुक्तमिवपाखंडंयोधर्मेधर्मविभ्रमः १२ अत्रिणाचोदितोहंतुंपृथुपुत्रोमहार।
थः अन्वधावतसंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् १३ तंतादृशाकृतिंवीक्ष्यमेनेधर्मंश।
रीरिणम् जटिलंभस्मनाच्छन्नंतस्मैबाणंनमुंचति १४ वधान्निवृत्तंतंभूयोहंतवेऽ
त्रिरचोदयत् जहियज्ञहनंतातमहेंद्रंविबुधाधनम् १५ एवंवैन्यसुतःप्रोक्तस्त्व।
रमाणंविहायसा अन्वद्रवदभिक्रुद्धोरावणंगृध्रराडिव १६ सोऽश्वंरूपंचतद्धित्वा।
तस्माअन्तर्हितःस्वराट् वीरःस्वपशुमादायपितुर्यज्ञमुपेयिवान् १७ तत्तस्यचा।
द्भुतंकर्मविचक्ष्यपरमर्षयः नामधेयंददुस्तस्मैविजिताश्वइतिप्रभो १८ उपसृज्य
तमस्तीव्रंजहाराश्वंपुनर्हरिः॥

र्मे विभ्रमः धर्मोऽयमिति भ्रांतिकरो यः तम् १२।१३ न मुंचति स्म १४
हंतवे हंतुं यज्ञहनं यज्ञं हतवंतम् १५ गृध्रराट् जटायुः १६ तस्मै हित्वा तदर्थमुत्सृज्य १७ विचक्ष्य दृष्ट्वा १८ उपसृज्य



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

काष्ठकटकः तद्युक्तात्सूपात् हिरण्यनिर्मितारशनायस्यतंरशनायादृढत्वेनछेदाशक्यारशनासहितमेवोद्धृत्ययूपा
प्राप्नीतवानित्यर्थः विभुःसमर्थः १९।२०। २१ अवद्यंनिंदितंरूपंमंदप्रज्ञाजगृहुः २२तदेवपाखंडनामनिरुक्त्यादर्शयति

चषालयूपतश्छन्नोहिरण्यरशनंविभुः १९ अत्रिःसंदर्शयामासत्वरमाणंविहाय
सा कपालखट्वाङ्गधरंवीरोनैनमबाधत २० अत्रिणाचोदितस्तस्मैसंदधेविशि
खंरुषा सोऽश्वंरूपंचतद्धित्वातस्थावंतर्हितःस्वराट् २१ वीरश्चाश्वमुपादायपितृ
यज्ञमथाव्रजत् तदवद्यंहरेरूपंजगृहुर्ज्ञानदुर्बलाः २२ यानिरूपाणिजगृहे इं
द्रोहयजिहीर्षया तानिपापस्यखंडानिलिंगंखंडमिहोच्यते २३ एवमिंद्रेहरत्यश्वं
वैन्ययज्ञजिघांसया तद्गृहीतविसृष्टेषुपाखंडेषुमतिर्नृणाम् २४ धर्मइत्युपधर्मे
षुनग्नरक्तपटादिषु प्रायेणसज्जतेभ्रान्त्यापेशलेषुचवाग्मिषु २५ तदभिज्ञायभ
गवान्पृथुःपृथुपराक्रमः इंद्रायकुपितोबाणमादत्तोद्यतकार्मुकः २६ ॥ इतियानीति।

बहुवचनेनचान्यान्यपिगृहीतानीत्युक्तम् २३ तत्प्रभृतिपाखंडमार्गाःप्रवृत्ताइत्याह एवमिति तेनगृहीतेषुपु
नर्विसृष्टेषु २४ नग्नाजैनाः रक्तपटाःबौद्धाः आदिशब्देनकापालिकादयः तेषुउपधर्मेषुधर्मोपमेषुधर्मएवायमिति

षु वाग्मिषु उक्तिकौशलवत्सु २५। २६ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

शक्रवधे अभिसंधितं कृताभिप्रायं प्रचोदितात् यज्ञो वधादन्यस्य वधस्तु न युज्यते २७ तद्दूषणं तु वयं करिष्याम इत्याहुः वयमिह यज्ञनाशकं त्वत्कीर्त्यैव हततेजसं मरुत्वन्तमिन्द्रमाह्वयामहे कैः अयातयामैरगतवीर्यैराह्वानमन्त्रैः अनंतरं च ते तवाहितं जुहवाम होष्यामः २८ अस्यएथोः स्रुक्हस्ते येषां तान् २९ यमिंद्रं यज्ञेन जिघांसथ यज्ञेन इष्टाः सर्वे सुरा यस्य ।

तमृत्विजः शक्रवधाभिसंधितं विचक्ष्य दुष्प्रेक्ष्यमसह्यरंहसम् । निवारयामासुरहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात् २७ वयं मरुत्वंतमिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा हतत्विषम् । अयातयामोपहवैरनंतरं प्रसह्य राजन् जुहवाम तेऽहितम् २८ इत्यामन्त्र्य क्रतुपतिं विदुरास्यर्त्विजो रुषा । स्रुग्घस्तान् जुह्वतोऽभ्येत्य स्वयंभूः प्रत्यषेधत २९ न वध्यो भवतामिंद्रो यद्यज्ञो भगवत्तनुः । यं जिघांसथ यज्ञेन यस्येष्टास्तनवः सुराः ३० तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः । इंद्रेणानुष्ठितं राज्ञः कर्मैतद्विजिघांसता ३१ ॥

॥ तनवः स इंद्रो भवतां वधार्हो न भवति यद्यस्माद्यज्ञो नाम आद्य मिंद्रो भगवतस्तनुः अवतारस्तदुक्तं द्वितीये ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत स यामाद्यैः सुरगणैरपात्स्वायंभुवांतरमित्युक्तत्वा । त् ३० अतो बलीयसाऽनेन सख्यमेव कर्त्तव्यं अन्यथा भूयः पाखण्डं स्रक्ष्यतीत्याशयेनाह तदिदमिंद्रेणानुष्ठितं महद्दत्याय्यं पश्यत किमित्यपेक्षायामाह धर्मस्य व्यतिकरं विपर्ययं पाखंडपथम् ३१ ॥ ३१ ॥ छ



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तर्हि किमत्र युक्तमित्यत आह पृथुकीर्त्तेरिति एकेनोनं शतं यस्मिन् तादृशः क्रतुप्रयोगः पृथोर्भूयात् पृथुरिति पाठे एको नशतं क्रतवो यस्य तादृशोपि महेंद्रात् पृथुकीर्त्तिर्भूयादित्यर्थः तदेवमृत्विजः प्रत्युक्त्वा पृथुं प्रत्याह अलमिति ३२ आत्मा नैवात्मने महेंद्राय रोषं कर्त्तुं नार्हसि तत्र हेतुः उभावपीति ३३ तथापि क्रतुसमाप्तिमेव ध्यायंतं प्रत्याह अस्मिन् यज्ञवि

पृथुकीर्त्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः अलं ते क्रतुभिः स्विष्टैर्यद्भवान्मोक्षधर्मवित्

३२ नैवात्मने महेंद्राय रोषमाहर्त्तुमर्हसि उभावपि हि भद्रं ते उत्तमश्लोकविग्रहौ ३३

मास्मिन्महाराज कृथाः स्म चिंतां निशामयास्मद्वच आदृतात्मा यद्ध्यायतो दैवहतं नु

कर्त्तुं मनोतिरुष्टं विशते तमोऽधम् ३४ क्रतुर्विरमतामेष देवेषु दुरवग्रहः धर्मव्य

तिकरो यत्र पाखंडैरिन्द्रनिर्मितैः ३५ एभिरिंद्रोपसंसृष्टैः पाखण्डैर्हारिभिर्जनम्

ह्रियमाणं विचक्ष्वैनं यस्ते यज्ञध्रुगश्वमुट् ३६ भवान्परित्रातुमिहावतीर्णो धर्मं ज

नानां समयानुरूपम् ॥ ३७ ॥

मे चिंतां मा स्म कृथाः यद्यस्माद्दैवहतं कार्यं कर्त्तुं ध्यायतो मनः तु नितरां रुष्टं सत् अन्धतमो मोहं विशति न तु शांतिं लभते ३४ अत एव न वक्रतुर्विरमतु नन्विंद्रः किं न निवार्यते अत आह यतो देवेषु दुराग्रहो भवतीति यत्र क्रतौ ३५ इंद्रदुराग्रहकृतमनर्थं पश्येत्याह एभिरिंद्रेणोपसृष्टैरधिष्ठितैः हारिभि श्चितापकर्षकैः यइंद्रस्ते अश्वं मुष्णातीति तथा यज्ञाय द्रुह्यतीति तथा तेन सृष्टैः ३६ ततो मम किमिति चेत्तत्राह भवानि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

द्वाभ्याम् सांख्ययोगादिना नासिद्धांतानुरूपं धर्मं वेनस्यान्यायात् लुप्तं परित्रातुं नदेहाद्विष्णोः कलैकत्वमवतीर्णो
सि ३७ अस्य विश्वस्योद्भवं विचार्य ये रुत्यादितोसि तेषां विश्वसृजां संकल्पं पिपीएहि आर्षः प्रयोगः पूरयेत्यर्थः प्रचंडे

वेनापचाराद्बलुप्तमद्यनदेहस्तोविष्णुकलाऽसिवैन्य ३७ सत्वंविमृश्यास्यभवंप्र॰
जापतेसंकल्पनंविश्वसृजांपिपीएहि ऐंद्रींचमायामुपधर्ममातरंप्रचंडपाखण्डप॰
थंजहिप्रभो ३८ मैत्रेयउवाच इत्थंसलोकगुरुणासमादिष्टोविशांपतिः तथाकृत्वा॰
चवात्सल्यंमघोनापिचसंदधे ३९ कृतावभृथस्नानायपृथवेभूरिकर्मणे वरान्ददु॰
स्तेवरदायेतद्बर्हिर्षितर्पिताः ४० विप्राःसत्याशिषस्तुष्टाःश्रद्धयालब्धदक्षिणाः॥
आशिषोयुयुजुःक्षत्तरादिराजायसत्कृताः ४१ त्वयाहूतामहाबाहोसर्वएवसमाग
ताः पूजितादानमानाभ्यांदेवर्षिपितृमानवाः ४२॥ इतिश्रीभागवतेमहापुराणेच
तुर्थस्कन्धेपृथुविजयेएकोनविंशोध्यायः १९ ऋषिरुवाच॥

५ यः पाखण्डमार्गः सै
वैंद्री मायोपधर्मजननी तां जहि ३८ तथा कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वा इंद्रेण सह संधानं चकृतवा॰
न् ३९ कृतमवभृथसंबंधिस्नानं येन स तस्मै ४० । ४१ तुष्टानां वाक्यं त्वयेति ४२॥ इति चतुर्थे टीकायां एकोनविंशः

रामः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम्। वरदानप्रसंगेन प्रीतिश्चान्योऽन्यमीर्यते १ मघवना साकं इंद्रेण सह वर्त्तमनः १ आत्मनं त्वां क्षमाकारयतोऽमुष्यत्वमपि क्षंतुमर्हसि २ यर्हि यस्मात् कलेवरमात्मा न भवति अतस्तदभिमानेन भूतेभ्यो नाभिद्रुह्यंति ३।४ अविद्यास्वरूपाज्ञानेन ततः कामः ततः कर्म तैरारब्ध इति विद्वान् अत एव प्रतिबुद्ध आत्म

भगवानपि वैकुण्ठः साकं मघवता विभुः। यज्ञैर्यज्ञपतिस्तुष्टो यज्ञभुक्तमभाषत

१ भगवानुवाच। एष तेऽकारषीद्भंगं हयमेधशतस्य ह। क्षमापयत आत्मानममुष्य क्षंतुमर्हसि २ सुधियः साधवो लोके नरदेव नरोत्तमाः। नाभिद्रुह्यंति भूतेभ्यो यर्हि नात्मा कलेवरम् ३ पुरुषा यदि मुह्यंति त्वादृशा देवमायया। श्रम एव परं जातो दीर्घया वृद्धसेवया ४ अतः कायमिमं विद्वानविद्याकामकर्मभिः। आरब्ध इति नैवास्मिन्प्रतिबुद्धोऽनुषज्जते ५ असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे। अपत्ये द्रविणे वाऽपि कः कुर्यान्ममतां बुधः ६ एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः।

ज्ञः अस्मिन्नैवानुषज्जते ५ तथाऽपि पुत्रादिममत्वेन भूतद्रोहेण च संगो भवेत् तत्राह अ संसक्त इति ६ प्रतिबोधक्रमं विवृण्वन् देहेऽनुषङ्गाभावमाह एक इति द्वाभ्याम् असावात्मा नो देहात्परोऽभिन्नः तत्र नवधा वैलक्षण्येन भेदं साधयति एक इति नवभिः पदैः देहो हि बालयुवादिभेदादनेकः मलिनश्च ज

डश्चसगुणश्चस्वस्यकारणभूतगुणाश्रितश्चपरिच्छिन्नश्चगृहादिभिरावृतश्चदृश्यश्चस्वात्मातुनैवंअतोभिन्नः
७ आत्मस्थंस्वस्मिन्स्थितंप्रकृतिस्थोपिदेहस्थोपितद्विकारैर्नलिप्यतेयतःसमयिब्रह्मणिस्थितः ८ इयमव
स्थाकस्योसद्यतेइत्यपेक्षायामाह यःस्वधर्मेणेतिचतुर्भिः ९ भवतुमनःप्रसन्नंततःकिंतत्राह यर्हिविशदाशयः
प्रसन्नमनाःतदापरित्यक्तगुणःसन्सम्यक्दर्शनोभूत्वाशांतिमश्नुतेशान्तिमेवाह मेममसम्यगौदासीन्येनअव

सर्वगोऽनावृतःसाक्षीनिरात्मात्मात्मनःपरः ७ यएवंसंतमात्मानमात्मस्थंवेदपूरु
षः नाज्यतेप्रकृतिस्थोऽपितद्गुणैःसमयिस्थितः ८ यःस्वधर्मेणमांनित्यंनिराशी
श्च इत्यान्वितः भजतेशनकैस्तस्यमनोराजन्प्रसीदति ९ परित्यक्तगुणःसम्य
ग्दर्शनोविशदाशयः शांतिंमेसमवस्थानंब्रह्मकैवल्यमश्नुते १० उदासीनमिवा
ध्यक्षंद्रव्यज्ञानक्रियात्मनाम् कूटस्थमिममात्मानंयोवेदाप्नोतिशोभनम् ११ भि
न्नस्यलिंगस्यगुणप्रवाहोद्रव्यक्रियाकारकचेतनात्मनः॥

७ स्थानमेवब्रह्मतदेवकैव
ल्यंतदश्नुते १० सम्यग्दर्शनमेवाह उदासीनमेवात्मानंद्रव्यज्ञानक्रियात्मनांदेहज्ञानकर्मेन्द्रियमनसामध्यक्षमि
वस्थितमात्मानंयोवेद ११ संसारिणःकथंकूटस्थत्वमतआह भिन्नस्यलिंगस्यदेहस्यगुणप्रवाहःसंसारःभिन्नत्वेहे
तुःद्रव्याद्यात्मकस्यनतुचेतनाचिदाभासःअतोदृष्टास्फूर्त्याप्ताम्॥ ९ ॥ १० ॥ ९ ॥ १० ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हर्षशोकादिभिर्नविक्रियंते १२ त्वंच सूरिः अतः सुखेदुःखेच समः सन् समानाउत्तममध्यमाधमाः यस्यजितानींद्रियाणिआशयश्च येनसत्वं अखिललोकरक्षणंविधत्स्व कथमेकेनमयारक्षणंकर्त्तुंशक्यंतत्राह मयेश्वरेणउपल्कृप्ताः संपादितायेअखिलालोकाअमात्यादयस्तैः संयुतः १३ ननुरक्षणंदण्डादिसापेक्षमतस्तपोऽन्यद्वापुण्यंकरिष्यामीतिचेत्तत आह श्रेयइति यत् यस्मात्सांपरायेपरलोकप्रजाभिः कृतात्सुकृतात्षष्ठमंशंहर्त्ताहरति अरक्षणे

दृष्टास्सुसंपत्सुविपत्सुसूरयोनविक्रियंतेमयिबद्धसौहृदाः १२समः समानोत्तममध्यमाधमःसुखेचदुःखेचजितेंद्रियाशयः मयोपक्लृप्ताऽखिललोकसंयुतो विधत्स्ववीराऽखिललोकरक्षणम् १३ श्रेयः प्रजापालनमेवराज्ञोयत्सांपरायेसुकृतात्षष्ठमंशम् हर्त्तान्यथाहृतपुण्यः प्रजानामरक्षिताकरहारोघमत्ति१४ एवंद्विजाग्र्यानुमतानुवृत्तधर्मप्रधानोऽन्यतमोऽवितास्याः हस्वेनकालेनगृहोपयातान् द्रष्टासिसिद्धाननुरक्तलोकः १५ ॥ दोषमाह अन्यथाप्रजाभिःहृतंपुण्यंयस्यसः प्रजानामघमत्तिपापंभुंक्ते अन्यथेत्यस्यविवरणंकरहारः सन्नरक्षिताचेत् १४ एवंचमोक्षोपिअनायासेनभविष्यतीत्याह द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्चपरंपराप्राप्तोयोधर्मः सएवप्रधानंअर्थकामौतुप्रासंगिकौयस्यअन्यतमः अतिशयेनान्यः धर्मादिष्वनासक्तइत्यर्थः एकपद्यपाठेधर्मप्रधानावन्यतमोअर्थकामौयस्येत्यर्थः अस्याःपृथिव्याअवितासन् अल्पेनकालेनगृहागतान्सनकादीनद्रष्टासिअनुरक्तोलोकोयस्मिन्सः १५ ॥ १५ ॥ ६

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मत्तमत्तः सकाशात्किञ्चित्वरं वृणीष्व गुणाः शमादयः शीलं निर्मत्सरत्वादि स्वभावः तैरहं यंत्रितः वशीकृतः तद्रहितैस्तु मखादिभिर्नाहं सुलभः यतः समं चित्तं येषां तेष्वेव वर्त्तितुं शीलं यस्य सोहम् १६ । १७ समापयितुं पादयोः स्पृशंतं स्वेन कर्मणा अश्वापहरणेन व्रीडितं प्रेम्णा परिष्वज्य १८ भगवान्प्रस्थानाभिमुखोप्यनुग्रहेण विलंबितः सन्न प्रतस्थे

वरं च मत्कंचन मानवेंद्र वृणीष्व तेऽहं गुणशीलयंत्रितः नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती १६ मैत्रेय उवाच स इत्थं लोकगुरुणा विष्वक्सेने-न विश्वजित् अनुशासित आदेशं शिरसा जगृहे हरेः १७ स्पृशंतं पादयोः प्रेम्णा व्री-डितं स्वेन कर्मणा शतक्रतुं परिष्वज्य विद्वेषं विससर्ज्ज ह १८ भगवानथ विश्वात्मा पृथुनोपहृतार्हणः समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः १९ प्रस्थानाभि-मुखोप्येनमनुग्रहविलंबितः पश्यन्पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम् २० स आदिराजो रचितांजलिर्हरिं विलोकितुं नाशकदश्रुलोचनः ॥

प्रयाणं न कृतवा-निति द्वयोरन्वयः कथंभूतः उपहृतमर्पितमर्हणं यस्मै समुज्जिहानया समुद्गच्छंत्या वर्द्धमानया भक्त्या गृहीते चर-णांबुजे यस्य १९ पद्मपलाशवदक्षिणी यस्य तथाभूतः सन् एनं पृथुं पश्यन् २० भगवतस्तत्स्वरूपातिरेकमुत्क्रांतस्य भक्त्युद्रेकमाह स इति द्वाभ्याम् बाष्पविक्लवत्वेन तूष्णीमवस्थितः सन् ॥ ॐ ॥ ॐ ॥ ॐ ॥ एमः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अमुं हरिं हृदोपगुह्य आधात् धृतवान् २१ अतृप्तयोर्दृशोर्गोचरं विषयभूतं पदा क्षितिं स्पृशंतमित्ययं भावः न खलु देवाः पदा भुवं स्पृशंति अतः कृपापरवशो नूनं हरिरात्मानं विस्मृतवानिवेति अत एव स्खलनपरिहारायैव गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तम् २२ वरं वृणीष्वेति यदुक्तं तदसहमान आह हे विभो वरदानां ब्रह्मादीनामीश्वरात् त्वत् त्वत्तः सकाशात् बुधः कथं वरान् वृणीते तिकीदृशान् गुणैर्विक्रियत इति गुणविक्रियो देहका-

न किंचनोवाच स बाष्पविक्लवो हृदोपगुह्यामुमधादवस्थितः २१ अथावमृज्या-
श्रुकला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम् पदा स्पृशंतं क्षितिमंस उन्नते वि-
न्यस्तहस्ताग्रमुरंगविद्विषः २२ पृथुरुवाच वरान्विभो त्वद्वरदेश्वराद्बुध कथं वृ-
णीते गुणविक्रियात्मनाम् ये नारकाणामपि संति देहिनां तानीश कैवल्यपते वृणे
न च २३ न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणांबुजासवः महत्तमांत-
र्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः २४ ॥ ऽरः स एवात्मा येषां तेषां ब्रह्मादीनां

संबंधिनः देहाभिमानिनां भोग्यानीति वा तथा चेद् बुध एव न भवतीत्यर्थः जुगुप्सितत्वादपीत्याह ये इति बुध एवाहमपि न वृणे इति समुच्चयाय चकारः २३ कैवल्यपते इति संबोधनात् कैवल्यं वरिष्यतीति माशंकीरित्याह नेति महत्तमानामंतर्हृदयात् मुखद्वारेण निर्गतो भवत्पदांभोजमकरंदो यशःश्रवणादिरूपो यत्र नास्ति तादृशं चेत्कैवल्यं तर्हि तत् क्वचित् कदाचिदपि न कामये तर्हि किं कामयसे तदाह यशःश्रवणाय कर्णानामयुतं विधत्स्व नतु कै-

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ननुतर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशंक्याह सइति भवत्पदांभोजस्थायाः कणो लेशः तत्संबंधीयोऽनिलः सएव दूरादपि किंचिद्यशः श्रवणमात्रमित्यर्थः विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिं आत्मज्ञानं वितरति अतो न खलु भक्तानां रागादिसंभवः अतो नोऽस्माकं सारग्राहिणां अन्यैर्वरैरलं भक्तावेव मोक्षादि सर्वसुखांतर्भावादिति भावः २५ ननु भक्तिर्मुक्तिफलैव अतः फलं विहाय साधने भवतः कोयमाग्रह इत्याशंक्याह हे सुश्रवः मंगलकीर्ते ते शिवं यशः सतां संगमे यः सकृदपि यदृच्छयापि उपशृणो

सउत्तमश्लोकमहन्मुखच्युतो भवत्पदांभोजसुधाकणानिलः स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः २५ यशः शिवं सुश्रव आर्यसंगमे यदृच्छया चोपशृणोति ते सकृत् कथं गुणज्ञो विरमेद्विना पशुं श्रीर्यत्प्रवव्रे गुणसंग्रहेच्छया २६ अथाभजे त्वाऽखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः॥ २७॥ति गुणज्ञ श्चेत्पशुं विनाऽन्यः कथं विरमेत् गुणातिशयं सूचयति श्रीर्यत् यश एव प्रकर्षेण वतवती गुणानां सर्वपुरुषार्थानां संग्रहः स्वस्मिन्समाहारस्तदिच्छया २६ अतो लक्ष्मीरिव अन्यवरत्यागेन त्वामेवाहं भजे इत्याह अथेति लालसः उत्सुकः सन् कर्मणि क्रियमाणे यथेन्द्रेण सह कलिः एवं भक्तावपि किं लक्ष्म्या सह कलिः स्यादिति वितर्कयति एकस्मिन्पत्यौ स्पर्धमानयोरावयोरपि किं कलिर्न स्यादिति काक्वा वितर्कः ननु पर्यायेण सेवायां न स्यात् नैवं

भवतुवाकलिः तथापि भजेयमेवेत्याह जगज्जनन्यांवैशसंविरोधः स्यादेवतत्रहेतुः यस्याः कर्मणिनः समीहि
तंइच्छाभवति तथापीद्दविरोधेमत्पक्षपातवदत्रापित्वपक्षपातएवस्यादित्याह फल्गुतुच्छम पिउरुबहुकरो
षियतोदीनेषुवत्सलः स्वेस्वरूपएवरतस्यतयाकिंप्रयोजनंतानाद्रिय सइत्यर्थः २८ यतस्त्वंदीनवत्सलः अतए
वसाधवोनिष्कामाः अथज्ञानानंतरमपित्वांभजंतिकथंभूतंमायागुणानांविभ्रमोविलासस्तस्योदयः कार्यसनि

जगज्जनन्यांजगदीशवैशसंस्यादेवयत्कर्मणिनः समीहितम् करोषिफल्गव
प्युरुदीनवत्सलः स्वएवधिष्ण्येऽभिरतस्यकिंतया २८ भजंत्यथत्वामतएव
साधवोव्युदस्तमायागुणविभ्रमोदयम् भवत्पदानुस्मरणादृतेसतांनिमित्तम
न्यद्भगवन्नविद्महे २९ मन्येगिरंतेजगतांविमोहिनींवरंवृणीष्वेतिभजंतमात्थय
त् वाचानुतंत्याययदितेजनोऽसितः कथंपुनः कर्मकरोतिमोहितः ३० त्वन्माययाऽ
द्धाजनईशखंडितोयदन्यदाशास्तऋतात्मनोऽबुधः ॥ ३१ रस्तोयस्मिंस्तंते किमर्थंभजंत्य

तआह भवत्पदानुस्मरणाद्विनाऽन्यत्तेषांनिमित्तंफलंनविद्मः २९ वरैः प्रलोभनंचकृपालोस्तवानुचितमि
त्याशयेनाह मन्यइति तु अहोते वाचातंत्याययदिजनोऽयंअसितः अबद्धः स्यात्तर्हिपुनः पुनः फलेमोहितः स
न्कथंकर्मकरोति ३० त्वन्माययाखण्डितस्यत्वयापुनः खंडनंनकर्त्तव्यम् किंतुहितंचेष्टितव्यमित्याह त्वन्मा

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्वन्मायया कृतादात्मनः त्वत्तः खंडितः पृथक्कृतः यद्यतो न्यसुखादिकमाशास्ते अतः स्वयं अविज्ञापित एव हितं चेष्टितुमर्हसि ३१।३२।३३।३४।३५ वाग्वित्तांजलिभिर्भक्तितः पूजिताः संतः वैकुंठानुगताः पार्षदाश्च ३६ अनु

यथा चरेद्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितुम् ३१ मैत्रेय उवाच॥ इत्यादिराजेन नुतः स विश्वदृक् तमाह राजन्मयि भक्तिरस्तु ते दिष्ट्येदृशी धीर्मयि ते कृता यया मायां मदीयां तरति स्म दुस्त्यजाम् ३२ तत्त्वं कुरु मयादिष्टमप्रमत्तः प्रजापते मदादेशकरो लोकः सर्वत्राप्नोति शोभनम् ३३ मैत्रेय उवाच इति वैन्यस्य राजर्षेः प्रतिनंद्यार्थवद्वचः पूजितोऽनुगृहीत्वैनं गंतुं चक्रेऽच्युतो मतिम् ३४ देवर्षिपितृगंधर्वसिद्धचारणपन्नगाः किंनराप्सरसो मर्त्याः खगा भूतान्यनेकशः ३५। यज्ञेश्वरधिया राज्ञा वाग्वित्तांजलिभक्तितः सभाजिता ययुः सर्वे वैकुंठानुगतास्ततः ३६ भगवानपि राजर्षेः सोपाध्यायस्य चाच्युतः हरन्निव मनोऽमुष्य स्वधाम प्रत्यगात्प्रभुः ३७ अदृष्टाय नमस्कृत्य नृपः संदर्शितात्मने॥

ऽमुष्य राज्ञः हरन्निवेति लोकोक्तिः वस्तुतस्तस्य मनः सर्वदैव तदधीनमस्त्येव स्वधाम राज्ञो हृदयम् ३७ अदृष्टाय लोचनमपथमतिक्रांताय संदर्शित आत्मा।



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मूर्त्तिर्येन तस्मै वस्तुतः अव्यक्ताय ३८ ॥ इति चतुर्थे टीकायां विंशतिः २० ॥ एकविंशे तु पृथुना प्रजानामनुशासनम् महासत्त्रे स्फुरादीनां महासदसि वर्ण्यते १ पुरं यथा विसृष्टं तत्पुरमनुवर्णयति मौक्तिकैरिति त्रिभिः १ चंदना-

अव्यक्ताय च देवानां देवाय स्वपुरं ययौ ३८ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कन्धे विंशोऽध्यायः २० ॥ मैत्रेय उवाच मौक्तिकैः कुसुमस्रग्भिर्दुकूलैः स्वर्णतोरणैः महासुरभिभिर्धूपैर्मंडितं तत्र तत्र वै १ चंदनागरुतोयार्द्ररथ्याचत्वरमार्गवत् पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम् २ सवृंदैः कदलीस्तंभैः पूगपोतैः परिष्कृतम् तरुपल्लवमालाभिः सर्वतः समलंकृतम् ३ प्रजास्तं दीपबलिभिः संभृताशेषमंगलैः अभीयुर्मृष्टकन्याश्च मृष्टकुंडलमंडिताः ४ शंखदुंदुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् विवेश भवनं वीरः स्तूयमानो गतस्मयः ५ पूजितः पूजयामास तत्र तत्र महायशाः पौरान्जानपदांस्तांस्तान्प्रीतः प्रियवरप्रदः ६ ॥ ६ ॥

गरुयुक्तैस्तोयैरार्द्रा रथ्यादयस्तद्युक्तं तोक्मैर्हरितयवैः अंकुरैरिति वा अर्चिभिर्दीपैः २ सवृंदैः पुष्पफलयुक्तैः कदलीस्तंभैः पूगवृक्षैस्तथाविधैः सर्वतः समलंकृतं शोभितम् ३ संभृतान्यशेषाणि मंगलानि दध्यादीनि तैः सह अभिजग्मुः मृष्टाः उज्ज्वलाः कन्याश्च ४ गतस्मयो निरहंकारः ५ प्रियान्वरान्प्रददातीति तथा ६ ॥ ६ ॥ ८ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

गुणैर्महान् अतएवमहत्तमः पूज्यतमः ७ गुणैर्विजृंभितंऊर्ज्जितंगुणवद्भिः सभाजितंसत्कृतंयशोगृणंतमर्चे
यन्नाह सदस्यतेशौनक ८ लब्धान्यशेषसूराणामर्हणानियेनसः किमकरोदितिशेषः ९ श्रवणोत्कंठ्यमा
विष्कुर्वन्प्रार्थयतेकोन्विति यस्यविक्रमः पृथ्वीदोहनंतस्योच्छिष्टतुल्यंकामंतत्तस्यकर्मवद १० प्राचीनकर्म

सएवमादीन्यनवद्यचेष्टितः कर्माणिभूयांसिमहान्महत्तमः कुर्वञ्छशासाव
निमंडलंयशः स्फीतंनिधायारुरुहेपरंपदम् ७ सूतउवाच श्रुत्वादिराजस्यय
शोविजृंभितंगुणैरशेषैर्गुणवत्सभाजितम् क्षत्तामहाभागवतः सदस्यतेकौषार
विंप्राहगृणंतमर्चयन् ८ विदुरउवाच सोभिषिक्तः पृथुर्विप्रैर्लब्धाशेषसुरार्ह
णः बिभ्रत्सवैष्णवन्तेजोबाह्वोर्याभ्यांदुदोहगाम् ९ कोन्वस्यकीर्त्तिन्नशृणोत्यभि
ज्ञोयद्विक्रमोच्छिष्टमशेषभूपाः लोकाः सपालाउपजीवंतिकाममद्यापितन्मेवद
कर्मशुद्धम् १० मैत्रेयउवाच गंगायमुनयोर्नद्योरंतराक्षेत्रमावसन् आरब्धानेवबुभु
जेभोगान्पुण्यजिहासया ११ सर्वत्रास्खलितादेशः सप्तद्वीपैकदंडधृक्॥ ७ भिः प्रारब्धा

नेवबुभुजेनतुभोगांतरार्थंकर्माणिकरोतितदपिभोगेनपुण्यक्षपणेच्छयानतुसुखासक्त्येत्यर्थः ११ अस्खलितः
अप्रतिहतआदेशआज्ञायस्यसप्तसुद्वीपेषुएकएवदण्डंधारयतीतितथाकिंसर्वत्रेत्याह ब्रह्मकुलव्यतिरेकेणअ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तद्व्यतिरेकेणच १२ एकदातस्यमहासत्त्रेदीक्षासीत् तत्रसत्त्रेदेवादीनांसमाजआसीदित्यर्थः १३ तस्मिन्पूज्येषु अर्चितेषुसत्सुसद्सोमध्येउत्थितःसन्समंततःसमैक्षतेतिषष्ठश्लोकेनान्वयः १४ प्रांशुउन्नतःपीनावायतौभुजौ यस्यकंजवदरुणेईक्षणेयस्यशोभनाःद्विजाःस्मितंचयस्य १५ व्यूढंविस्तीर्णंवक्षोयस्यबलिभिस्तिसृभिर्वल्गुसुंद

अन्यत्रब्राह्मणकुलादन्यत्राच्युतगोत्रतः १२ एकदासीन्महासत्त्रेदीक्षातत्रदिवौकसाम् समाजोब्रह्मर्षीणांचराजर्षीणांचसत्तम १३ तस्मिन्नर्हत्सुसर्वेषुस्वर्चितेषुयथार्हतः उत्थितःसदसोमध्येताराणामुडुराडिव १४ प्रांशुःपीनायतभुजोगौरःकंजारुणेक्षणः सुनासःसुमुखःसौम्यःपीनांसःसुद्विजस्मितः १५ व्यूढवक्षा बृहच्छ्रोणिर्बलिवल्गुदलोदरः आवर्त्तनाभिरोजस्वीकांचनोरुरुदग्रपात् १६ सूक्ष्मवक्रासितस्निग्धमूर्द्धजःकंबुकंधरः महाधनेदुकूलाग्र्येपरिधायोपवीय च १७ व्यंजिताशेषगात्रश्रीर्नियमेन्यस्तभूषणः॥

रंदलवत् अधोऽग्रमश्वत्थपत्रमिवोपरिविस्तृतमधस्ताद् संकुचितसुदरंयस्यआवर्त्तवन्निम्नानाभिर्यस्यकांचनवदुज्ज्वलावूरूस्यस्यउदग्रावुन्नतौपादौयस्य १६ सूक्ष्माश्चतेवक्राश्चासिताश्चस्निग्धाश्चमूर्धजायस्यकंबुवत्त्रिरेखाऽंकिताकंधरायस्यपरिधायवसित्वाउपवीयउत्तरीयंकृत्वा १७ नियमेनिमित्तेन्यस्तानित्यक्तानिभूषणानियेनसः अतएवतैरनावृतत्वाद्व्यंजिताअशेषगात्रेषुश्रीःस्वाभाविकीशोभायेनकृतान्युचितानि॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कर्माणियेन शिशिरेसंतापहरेस्निग्धेचतारेययोस्तेअक्षिणीयस्य १८ इदंवक्ष्यमाणंवाक्यमुक्तवांस्त्वचारुश्रोत्रप्रियंचित्राणिपदानियस्मिन्श्लक्ष्णंप्रशस्तंमृष्टंस्फुटंगूढंगंभीरार्थंअविक्लवंअव्याकुलम् १९ भाषणेहेतुःधर्मजिज्ञासुभिःपुंभिःसत्कृस्वमनीषितमावेद्यंवक्तव्यंअतःप्रजानुशासनमिषेणजिज्ञासैवक्रियतेनयुष्मान्प्र

कृष्णाजिनधरःश्रीमान्कुशपाणिःकृतोचितः शिशिरःस्निग्धतारक्षःसमैक्षत समंततः १८ ऊचिवानिदमुर्वीशःसदःसंहर्षयन्निव चारुचित्रपदंश्लक्ष्णं। मृष्टंगूढमविक्लवम् १९ राजोवाच सभ्याःशृणुतभद्रंवःसाधवोयइहागताः सत्कुजिज्ञासुभिर्धर्ममावेद्यंस्वमनीषितम् २० अहंदण्डधरोराजाप्रजानामिहयोजितः रक्षितावृत्तिदःस्वेषुसेतुषुस्थापिताप्रथक् २१ तस्यमेतदनुष्ठानाद्यानाहुः। ब्रह्मवादिनःलोकाःस्युःकामसंदोहायस्यतुष्यतिदिष्टदृक् २२ यउद्धरेत्करंराजाप्रजाधर्मेष्वशिक्षयन् प्रजानांशमलंभुंक्तेभगंस्वंचजहातिसः २३॥ धुतिधर्मएव

प्रवचनमितिभावः २० इदानीप्रजाःशिक्षयिष्यन्प्रजाशिक्षणादिकंममावश्यकमित्याहअहमितित्रिभिःपृथक्सेतुषुस्थापयिता २१ दिष्टदृक्प्राक्कर्मसाक्षीईश्वरोयस्यतुष्यतितस्यवेदवादिनोयान्लोकानाहुःप्रजारक्षणाद्यनुष्ठानानेलोकामेस्युःकथंभूताःकामानांसंदोहःप्रपूरणंयेषु २२ अन्यथात्वनिष्टंस्यादित्याह यइतिशम

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तत्तस्मात् हे प्रजाः भर्त्तुर्मम पिंडार्थं पिण्डदानवत्परलोकहितार्थं स्वकार्यमेव कुरुत स्वधर्ममेवानुतिष्ठत अधोक्ष
जे धीर्येषां तादृशाः संतः वासुदेवार्पणदृष्ट्येत्यर्थः अनुग्रहः कृतो भवेदिति शेषः २४ शास्तुः शिक्षयितुः अ
नुज्ञातुरनुमोदितुश्च प्रेत्य परलोके यत्फलं तत्तुल्यम् २५ कर्म कर्त्तव्यमित्यनुमोदामहे न तु वासुदेवेऽर्पणीय

तत्प्रजा भर्तृपिंडार्थं स्वार्थमेवानसूयवः। कुरुताधोऽक्षजधियस्तर्हि मेऽनुग्रहः कृ।
तः २४ यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः। कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रे।
त्य तत्फलम् २५ अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमाः। इहामुत्र च लक्ष्यंते ज्यो
त्स्नावत्यः क्वचिद्भुवः २६ मनोरुत्तानपादस्य ध्रुवस्यापि महीपतेः। प्रियव्रतस्य रा
जर्षेरंगस्यास्मत्पितुः पितुः २७ ईदृशानामथान्येषामजस्य च भवस्य च प्रह्लाद
स्य बलेश्चापि कृत्यमस्ति गदाभृताम् २८ दौहित्रादीनृते मृत्योः शोच्यान्धर्मवि।
मोहितान्॥ ५भिविवेनादिभिस्तदनंगीकारादित्येवंवादिनः शनैः संबोधयन्नाह हे अर्हसत्तमाः य
ज्ञपतिर्नाम परमेश्वरः केषांचिन्मते नावदस्ति तथापि विप्रतिपत्तेर्न तत्सिद्धिरित्याशंक्य जगद्वैचित्र्यान्यथा
नुपपत्तिं प्रमाणयति इहामुत्र च ज्योत्स्नावत्यः कांतिमत्यः भुवो भोगभूमयः शरीराणि च २६ नन्विदं कर्मवै
चित्र्यादेव सेत्स्यति तथापि विदूरदनुभवेनेश्वरसिद्धिरित्याह मनोरिति त्रिभिः अस्मत्पितामहस्यांगस्य २७ कृत्यम

स्ति अवश्यं कर्मफलदात्रा भाव्यमिति तेषाम्मतमि
त्यर्थः २८ मृत्योर्द्रौहित्रादीन् वेनादीन्॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२९
भा०च०
टी०
७६

विनाधर्मैर्विमोहितान् अतःशोच्यान् ननुकर्मैवफलंदास्यतिविष्णुदेशगतावादेवताःकिंपरमेश्वरेणतत्राह
वर्गेतिवर्गोत्रत्रिवर्गःस्वर्गोधर्मस्यफलम् अपवर्गोमोक्षः तेषामैकात्म्येनएकरूपेणसर्वानुगतेनहेतुनात
त्रापिप्रायेणहेतुनाअयंभावःनतावज्जडस्यकर्मणफलदातृत्वंस्वतोघटतेनचार्वाक्देवतानांस्वातंत्र्यंअं
तर्यामिश्रुतेःनचतदाकर्मसाम्येफलतारतम्यंकचितद्सिद्धिश्चसंभवतिअतःस्वतंत्रेणकर्तुमकर्तुमन्यथा

वर्गस्वर्गापवर्गाणांप्रायेणैकात्म्यहेतुता २९ यत्पादसेवाऽभिरुचिस्तपस्विनाम-
शेषजन्मोपचितंमलंधियःसद्यःक्षिणोत्यन्वहमेधतीसतीयथापदांगुष्ठविनिः
सृतासरित् ३० विनिर्धुताशेषमनोमलःपुमानसंगविज्ञानविशेषवीर्यवान् य
दंघ्रिमूलेकृतकेतनःपुनर्नसंसृतिंक्लेशवहांप्रपद्यते ३१ तमेवयूयंभजतात्म
वृत्तिभिर्मनोवचःकायगुणैःस्वकर्मभिः ॥

कर्तुंसमर्थेनपरमेश्वरेणभाव्यमि २९ किंच
जीवानांमोक्षदःपरमेश्वरएवनार्वाक्देवताः तासामपिजीवत्वाविशेषादित्याशयेनाहत्रिभिः यस्यपादयोःसे
वायामभिरुचिःतपस्विनांसंसारतप्तानांअशेषैर्जन्मभिःसंवृद्धंधियोमलंसद्यःक्षपयतितमेवभजतेतित्रती
येनान्वयःकथंभूताअहन्यहनिवर्द्धमानासतीसात्विकीतसादसंबंधस्यैवैषमहिमेतिदृष्टांतेनाह यथेति ३० विधु
निर्धुताइस्वत्वमार्षंविनिर्धूताअशेषामनोमलायस्यअसंगोवैराग्यंतेनविज्ञानस्यविशेषः साक्षात्कारस्तदेव
७६

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

गुणैर्ध्यानस्तुतिसपर्यादिभिः स्वकर्मभिः यागादिभिः अमायिनः निष्कपटाः सन्तः ननु ब्रह्मादिभिः सेव्ये किमस्माकं त्वं भविष्यति तत्राह यथाधिकारमेवावसिता निश्चिता समाम्नावार्थसिद्धिर्येषाम् ३२ स्वकर्मभिर्यागादिभिर्भजतेत्युक्तं तत्र ब्रह्मार्पणं ब्रह्म हविरिति न्यायेन सर्वेषु यागतदंगतत्फलेषु भगवद्दृष्ट्या कर्म कर्त्तव्यं न भिन्नदृष्ट्येति वक्तुं तेषां भगवद्रूपतामाह द्वाभ्यां असौ भगवानेव स्वरूपतो विशुद्धविज्ञानघनोपि अगुणो निर्विशेषोपि सन्निह कर्ममार्गेऽनेकगुणः नानाविशेषणवान् अध्वरो यज्ञः संपद्यते यज्ञो वै विष्णुरिति श्रुतेः अनेकगुणत्वमेवाह पृथग्विधानि यानि द्रव्यादी

अमायिनः कामदुघांघ्रिपंकजं यथाऽधिकारावसितार्थसिद्धयः ३२ असाविहानेकगुणोऽगुणोऽध्वरः पृथग्विधद्रव्यगुणक्रियोक्तिभिः संपद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनः स्वरूपतः ३३ प्रधानकालाशयधर्मसंग्रहे शरीर एष प्रतिपद्य चेतनाम् क्रियाफलत्वेन विभुर्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः ३४

नि तैः तत्र द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः क्रियाः अवघातादयः उक्तयो मन्त्राः अर्थोऽङ्गसाध्य उपकारः आशयः संकल्पः लिंगं पदार्थानां शक्तिः नाम ज्योतिष्टोमादि तैश्चाध्वरः संपद्यते ३३ यागफलस्यापि भगवद्रूपतामाह प्रधानेति एष विभुः परमानंदोपि शरीरे चेतनाविषयाकारां बुद्धिं प्रतिपद्य तदभिव्यंग्यानंदरूपः सन् क्रियाफलत्वेन प्रतीयते एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः यथाऽनलो दारुषु स्थितः तद्गुणात्मकः दारुधर्मैर्दैर्घ्यवक्रत्वादिमान् तद्वत् कथंभूते शरीरे प्रधानमव्यक्तं कालः क्षोभकः आशयो वासनाधर्मोऽदृष्टं तैः संगृह्य

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तदेवमप्रवृत्तान्भगवद्भजनेप्रवर्त्यस्वतःप्रवृत्तानांप्रवृत्तिमभिनंदनेनदृढयति अहोइति वितरंतिकुर्वंति ३५
इदानींहरिभक्तिदार्ढ्यायब्राह्मणभक्तिंविधत्तेमाजात्विति अष्टभिः महृसश्चताऋद्धयः ताभिर्यद्राजकुलस्यतेजः।
तस्मात्सकाशाद्द्विजानांकुलेअजितोदेवतायेषांवैष्णवानांतेषांचकुलेमाजातुप्रभवेत्कदाचिदपिप्रभावंमाक

अहोममामीवितरंत्यनुग्रहंहरिंगुरुंयज्ञभुजामधीश्वरम् स्वधर्मयोगेनयजंति
मामकानिरंतरंक्षोणितलेदृढव्रताः ३५ माजातुतेजःप्रभवेन्महर्द्धिभिस्तितिक्ष
थायत्तपसाविद्ययाच देदीप्यमानेऽजितदेवतानांकुलेस्वयंराजकुलाद्द्विजाना
म् ३६ ब्रह्मण्यदेवःपुरुषःपुरातनोनित्यंहरिर्यच्चरणाभिवंदनात् अवापलक्ष्मी
मनपायिनींयशोजगत्पवित्रंचमहत्तमाग्रणीः ३७ यत्सेवयाशेषगुहाशयःस्वराट्
विप्रप्रियस्तुष्यतिकाममीश्वरःतद्देवतद्धर्मपरैर्विनीतःसर्वात्मनाब्रह्मकुलंनि
षेव्यताम् ३८ पुमांल्लभेतानतिवेलमात्मनःप्रसीदतोऽत्यंतशमंस्वतःस्वयम् ।।८

रोतुकथंभूतेसमृद्धिभिर्विनापिस्वयमेव तितिक्षादिभिर्दीप्यमानम् ३६ ब्राह्मणांस्तुवन्नाहयच्चरणाभिवं
दनाद्धरिर्लक्ष्मीयशश्चअ वाप ३७ यत्सेवयाचेश्वरस्तुष्यतितदेवब्रह्मकुलंनिषेव्यतामितिद्वयोरन्वयः हरे
र्लोकसंग्रहरूपोयोधर्मस्तत्परैः ३८ ननुब्रह्मकुलएवनित्यंसेव्यमानेसर्वदेवतासुखभूतेऽग्नौयज्ञाद्यनुष्ठानंनस्या



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

आजीविकानां अनुशासनं प्रजास्वनुरागः प्रकृतिस्वभावः ४९ उपासादितः प्रापितः कर्मभिर्भ्राम्यताम् ५० ईश्वर दृष्ट्याविप्रादयोपिप्रणमंतिनमइतिब्रह्माविश्यब्राह्मणजातिमधिष्ठायक्षत्रंक्षत्रियंबिभर्ति क्षत्रंचाविश्यब्रह्मबिभर्त्तितदुभयंचाविश्यइदंविश्वंबिभर्ति ५१ ॥ इतिचतुर्थस्कंधेटीकायांएकविंशतिः २१ द्वाविंशेतुपरंज्ञानंप्र

नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम् प्रजानुरागो महतां प्रकृतिः करुणात्म-
नाम् ४९ अद्य नस्तमसः पारस्त्वयोपासादितः प्रभो भ्राम्यतां नष्टदृष्टीनां कर्मभिर्दै-
वसंज्ञितैः ५० नमो विवृद्धसत्वाय पुरुषाय महीयसे यो ब्रह्मक्षत्रमाविश्य बिभर्त्तीदं
स्वतेजसा ५१ ॥ इति श्रीभागवते महापुराणे चतुर्थस्कंधे एकविंशो० २१ ॥ मैत्रेय उवा-
च । जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम् तत्रोपजग्मुर्मुनयश्चत्वारः सूर्यवर्चसः
१ तांस्तु सिद्धेश्वरान्राजा व्योम्नोऽवतरतोऽर्चिषा लोकानपापान्कुर्वत्या सानुगोऽच
ष्टलक्षितान् २ तद्दर्शनोद्गतान्प्राणान्प्रत्यादित्सुरिवोत्थितः ॥ थवेह रिशासनात्सन-
त्कुमारो भगवानुपादिशदितीर्य्यंते १ अर्चिषा लक्षितान् सनकादय इति ज्ञापितान् अचष्ट अपश्यत् २ तेषां दर्शनेनोद्गतान्प्राणान्प्राप्तुमिच्छुरिव अयं भावः ऊर्द्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आयति प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत इति स्मृतेः प्राणास्तावत्तत्तेजसाक्षिप्तास्तान् प्रत्युद्गच्छंति अतः स्वयमनुद्गच्छतः प्राण

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हानिः स्यादिति भयाद्विससंभ्रमं प्रत्युद्गमं च कारेति सहसदस्यैरनुगैश्च वर्त्तमानः इंद्रियेशो जीवः गुणान्गंधादीन्
प्रतियथोद्गच्छती स्योत्सुकोदृष्टांतः ३ यंत्रितो वशीकृतः गृहीतमध्यर्हणमर्घ्यमासनं च यैस्तान् ४ मार्जितं क्षालित
मलकबंधनं केशबंधनं यस्य मानयन्निवस्वयं चचार ५ भवस्याप्यग्रजत्वेन मान्यान् ६ प्रीतः प्राहेत्युक्तं तदेव प्रीति

ससदस्यानुगो वैन्य इंद्रियेशो गुणानिव ३ गौरवाद्यंत्रितः सभ्यः प्रश्रयानतकंधरः॥
विधिवत्पूजयांचक्रे गृहीताध्यर्हणासनान् ४ तत्पादशौचसलिलैर्मार्जितालकबंध
नः तत्र शीलवतां वृत्तमाचरन्मानयन्निव ५ हाटकासन आसीनान् स्वधिष्ण्येष्विव
पावकान् श्रद्धासंयमसंयुक्तः प्रीतः प्राह भवाग्रजान् ६ पृथुरुवाच अहो आचरितं
किं मे मंगलं मंगलायनाः यस्य वो दर्शनं ह्यासीद्दुर्दर्शानां च योगिभिः ७ किं तस्य दुर्ल
भनरमिह लोके परत्र च यस्य विप्राः प्रसीदंति शिवो विष्णुश्च सानुगः ८ नैव लक्षय
ते लोको लोकान्पर्य्यटतोऽपि यान् यथा सर्वदृशं सर्व आत्मानं येऽस्य हेतवः ९॥ २॥

पूर्वोक्तं वचनमाह अहो इति दशभिः हे मंगलायनाः मंगलमयनं येषां मया किं मंगलमाचरितम् यस्य मे योगिभि
रपि दुर्दर्शानां वः दर्शनमासीत् ७। ८ दुर्दर्शत्वमेवाह नैवेति सर्वदृशमात्मानं यथा सर्वे दृश्यान लक्षयंते येऽस्य विश्वा
स्य हेतवो महदादयो मन्वादयो वा यद्वा कथंभूतान् येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान् ९॥ ९॥ २॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यं

हे आर्याः आयुर्यावज्जीवं अधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ् रेणुम् ४२ गुणभजनस्य फलमाह गुणायनं अन्वनुसंपदः संवृणते सम्यग्भजंति तस्मात् प्रसीदतां प्रसीदतु गवां च कुलम् ४३ ४४ साधुवादमाह पुत्रेणेति

तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीटमायुः यं नित्यदा बिभ्रत आशु पापं नश्यत्यमुं सर्वगुणा भजंति ४२ गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयं संवृणतेऽनुसंपदः प्रसीदतां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ४३ मैत्रेय उवाच इति ब्रुवाणं नृपतिं पितृदेवद्विजातयः तुष्टुवुर्हृष्टमनसः साधुवादेन साधवः ४४ पुत्रेण जयते लोकानिति सत्यवती श्रुतिः ब्रह्मदंडहतः पापो यद्वेनोऽत्यतरत्तमः ४५ हिरण्यकशिपुश्चापि भगवन्निंदया तमः विविक्षुरत्यगात्सूनोः प्रल्हादस्यानुभावतः ४६ वीरवर्य पितः पृथ्व्याः समाः संजीव शाश्वतीः यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्त्तरि ४७ अहो वयं त्वद्य पवित्रकीर्त्ते त्वयैव नाथेन मुकुंदनाथाः य उत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनक्ति ४८॥ षड्भिः यद्यतः वेनोपि तमोनरकमत्यतरत् इति ततार ४५ ४६ ४७ मुकुंदनाथाः स्मस्त्वन्नाथत्वमेव पर्यवसितमित्यर्थः तत्र हेतुः य इति ४८



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यस्यब्रह्मकुलस्यनित्यंसंबंधेननिषेवयापुमान्स्वयमेवज्ञानाभ्यासादिकंविनापिअत्यंतमुत्तमंशममोसंलभेतकु
तःयत्सेवयास्वतएवअनतिवेलंशीघ्रंप्रसीदन्तः श्रद्धतःआत्मनश्चित्तात्ततःपरंश्रेष्ठंदेवानांकिंसुखमस्ति ब्राह्मण
सेवयैवयज्ञादिफलंज्ञानफलंचतत्सर्वंभवतीत्यर्थः ३९ हरेरपितदेवपरंसुखमित्याह अश्नातीति इज्यानांइंद्रादी
नांनामभिर्यस्यसुखेश्रद्धयाहुतंहविरनंतोयथाश्नातितथाचेतमयारहितेहुताशनेहुतंनाश्नाति केहुतमश्नाति नत्त्व
कोविदैः सर्वदेवमयश्चैतन्यमूर्तिरनंतइतितत्त्वविद्भिः कुतएवंभूतास्तेनत्राह पारमहंस्यंज्ञानंतत्पराणहेतिअधि

## यन्नित्यसंबंधनिषेवयाततःपरंकिमत्रास्ति मुखंहविर्भुजाम् ३९ अश्नात्यनंतः। खलुतत्त्वकोविदैःश्रद्धाहुतंयन्मुखइज्यनामभिः नवैतथाचेतनयाबहिष्कृतेहु। ताशनेपारमहंस्यपर्यगुः ४० यद्ब्रह्मनित्यंविरजंसनातनंश्रद्धातपोमंगलमौनसं यमैः समाधिनाबिभ्रतिहार्थदृष्टयेयत्रेदमादर्शइवावभासते ४१॥

कुर्वंतीतिपारमहं
स्यपर्याः तागावोवाचोयस्मिन्उपनिषद्भिर्ज्ञानघनत्वेनउक्तइत्यर्थः यद्वापरमहंसानांज्ञाननिष्ठानांगम्यःपारम
हंस्यः परितोनगच्छंतिगावोवाचोयस्मिन्सपर्य्यगुः इंद्रियनियंतासचासौसचपारमहंस्यपर्य्यगुःज्ञानरूपः स
र्वांतर्यामीत्यर्थः ४० नकेवलंचेतनत्वेनहुताशनाद्विशेषः किंतुवेदज्ञानादपीत्याह यदित्यव्ययत्ते ब्रह्मवेदंनित्यंबि
भ्रतितेषामित्युत्तरेणान्वयः मंगलंनामप्रशस्ताचरणंनित्यमप्रशस्तस्यवर्जनंएतद्धिमङ्गलंप्रोक्तमृषिभिस्तत्त्वद
र्शिभिः मौनमध्ययनविरोधिवार्त्तात्यागः समाधिनाचित्तस्थैर्येण अर्थदृष्टयेवेदार्थमपिविचारयंतीत्यर्थःयत्रवेदेइ



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

येषांसाधूनांगृहाःअर्हाणांपूज्यानांवर्याःवरणीयाःस्वीकारार्हाःअंबादयोयेषुतादृशाःअंबुचतृणंचभूमिश्चईश्व
रोगृहस्वामीचअवराभृत्यादयश्च१०व्यालानामालयाद्रुमाएवतेअरिक्ताःपूर्णाःअखिलाःसंपदोयेषुतादृशाअपि
यद्गृहाःयेगृहाःतीर्थपादीयावैष्णवाःतेषांपादतीर्थेनविवर्जिताः११स्वागतंभद्रमागमनंजातम्यद्यस्माद्बालाए

अधनाअपितेधन्याःसाधवोगृहमेधिनः यद्गृहाह्यर्हवर्याम्बुतृणभूमीश्वरावराः॥
१० व्यालालयद्रुमावैतेऽप्यरिक्ताखिलसंपदः यद्गृहास्तीर्थपादीयपादतीर्थविव
र्जिताः ११ स्वागतंवोद्विजश्रेष्ठायद्व्रतानिमुमुक्षवः चरंतिश्रद्धयाधीराबालाएव
बृहंतिवै १२ कच्चिन्नःकुशलंनाथाइंद्रियार्थार्थवेदिनाम् व्यसनावापएतस्मिन्प
तितानांस्वकर्मभिः १३ भवत्सुकुशलप्रश्नआत्मारामेषुनेष्यते कुशलाकुशलाय
त्रनसंतिमतिवृत्तयः १४ तदहंकृतविश्रंभःसुहृदोवस्तपस्विनाम् संपृच्छेभव
एतस्मिन्क्षेमःकेनांजसाभवेत् १५ व्यक्तमात्मवतामात्माभगवन्नात्मभावनः॥ २

वभवंतोबृहंतिव्रतानिचरंतियद्वायेषांवोव्रतानिअन्येबालाश्चरंति १२ इंद्रियार्थमेवार्थंपुरुषार्थंयेविंदंतिते
षान्नःव्यसनान्युप्यंतेयस्मिन्तस्मिन्संसारे १३ नन्वभ्यागतानांकुशलंपृच्छ्यतेलोकेनत्वात्मनस्तत्राहभवत्स्वि
ति १४ ततस्मात्कृतविश्वासःसन्तपस्विनांसंतप्तानांसुहृदोयुष्मान्पृच्छामि १५ नखल्वन्ययोगितुल्यायूयंकिंतु



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

आत्मवतां धीराणामात्मा तेषामात्मत्वेन प्रकाशमानः आत्मानं भावयति प्रकाशयतीति तथा इमां पृथ्वीं चरति सूक्तं शोभनवचनं सारं न्याय्यं स्फुटं गंभीरार्थं मितमल्पाक्षरं मधु श्रोत्रप्रियं मुखश्री—त्या स्मयमान इव प्रसीयमानः १६ १७ विदुषा जानताऽपि ईदृशी परार्थैकपरा १८ स्वयमपि पृथोः संगममभिनंदति संगम इति उभयेषां वक्तॄणां श्रोतॄ

स्वानामनुग्रहाय इमां सिद्धरूपी चरत्यजः १६ मैत्रेय उवाच पृथोस्तत्सूक्तमाकर्ण्य सारं स्फुटं मितं मधु स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह १७ सनत्कुमार उवाच साधु पृष्टं महाराज सर्वभूतहितात्मना भवता विदुषा चापि साधूनां मतिरीदृशी १८ संगमः खलु साधूनामुभयेषां च संमतः यत्संभाषणसंप्रश्नः सर्वेषां वितनोति शम् १९ अस्त्येव राजन्भवतो मधुद्विषः पादारविंदस्य गुणानुवादने रतिर्दुरापा विधुनोति नैष्ठिकी कामं कषायं मलमंतरात्मनः २० शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यग्विमृशेषु हेतुः॥

ॐ णां च येषां संभाषणसहितः संप्रश्नः सर्वेषां शं सुखं विस्तारयति १९ तदेवं संगमं प्रश्नं चाभिनंद्य अनुवादमुखेनैव मोक्षसाधनमुपदिशति अस्त्येवेति गुणानामनुवादने प्रश्नद्वारेण अनुवादप्रवर्तने श्रवण इत्यर्थः आत्मनो मनसोऽतस्थं कामात्मकं मलं विधुनोति कषायं धातुरागवदनिवर्त्यम् २० चित्तशुद्धौ च बहिर्वैराग्यमात्मनि रतिश्च भवति न च ततोऽधिकं साधनमस्ति शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह शास्त्रेष्वि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सध्यग् विमर्शेतु सम्यग्विचारवत्त्वं सेमस्यहेतुरेतावानेवस्फ निश्चितः कोसौ आत्मव्यतिरिक्ते असंगोवैराग्यं आ
त्मनि चरतः आत्मनो विशेषणं निर्गुणेब्रह्मणीति २१ नन्वेतदेवातिदुर्लभमित्याशंक्य उत्तमाधिकारिणः श्रवणमा
त्रेण भवति अन्यस्यतु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्द्धमानया भक्त्येत्यभिप्रेत्याह सेति चतुर्भिः साब्रह्म
णि रतिरसंगश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः जिज्ञासया तत्तद्विशेषया बुभुत्सया पुण्यश्रवो यशो यस्य तस्य ह

**असंग आत्मव्यतिरिक्त आत्मनि दृढा रतिर्ब्रह्मणि निर्गुणे चया २१ साश्रद्धया भगव**
**द्धर्मचर्यया जिज्ञासयाऽध्यात्मिकयोगनिष्ठया योगेश्वरोपासनया च नित्यं पुण्यश्र**
**वः कथया पुण्यया च २२ अर्थेन्द्रियाराम सगोष्ठ्यतृष्णया तत्संमतानामपरिग्रहेण।**
**विविक्तरुच्या परितोष आत्मन् विना हरेर्गुणपीयूषपानात् २३ अहिंसया पारमहं**
**स्यचर्यया स्मृत्या मुकुंदाचरिताग्र्यसीधुना यमैरकामैर्नियमैश्चाप्यनिंदया निरीह**
**(याद्वंद्वतितिक्षया च २४**

रिः पुण्यायाः कथा तया च २२ अर्थारामाः अर्थनिष्ठास्तामसाः इंद्रियारामाः का
मनिष्ठा राजसाः तैः सह या गोष्ठी तस्याम तृष्णया तेषां च ये संमता अर्थाः कामाश्च तेषामपरिग्रहेण विविक्ते विज
नेगारुचिस्तया आत्मन्येव परितोषेच सति स्यात् किंतु हरेर्गुणपीयूषपानाद्विना तस्मिन्सति विविक्तेरुचिर्नकार्या न
चात्मनि परितोषः कार्य इत्यर्थः २३ पारमहंस्यचर्यया उपशमादिप्रधानया वृत्त्या स्मृत्या आत्महितानुसंधानेन मुकुंदा
चरितमेवाग्र्यं सीधुश्रेष्ठममृतं तच्चरितस्मृतिमुखेनेत्यर्थः मार्गांतरस्यानिंदया निरीहया योगक्षेमार्थक्रियाराहित्येन



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कथयेत्यत्रोक्तमपिकथनंभक्तावंतरंगत्वेनपुनरुच्यतेतत्पराहरिभक्तास्तेषांकर्णपूराःकर्णालंकारभूतायेह
रेर्गुणास्तेषामभिधानेननसदसतिकार्यकारणरूपे २५ भवत्वन्यत्रासंगः आत्मरतिश्चततःकिमतआहयदानिष्ठांब्र
ह्मरतिर्भवतितदाआचार्यवान्सन्ज्ञानवैराग्ययोर्वेगेनअवीर्यनिवासनंसत्जीवस्यकोशमावरकंहृदयंपुमा
न्दहतिकथंभूतंपंचमहाभूतप्रधानंयद्वा अविद्यास्मितारागद्वेषाभिनिवेशाःपंचतदात्मकंउत्थितःप्रज्वलितो
ग्निर्योनिमरणिमिवयद्वायदारतिराचार्यानुग्रहश्चतदाज्ञानविरागयोर्वेगेनउत्थितःसाक्षात्कारःअवीर्यंपुनःप्ररो

**हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेनविजृंभमाणया भक्त्यात्यसंगःसदसत्यनात्मनि**
**स्यान्निर्गुणेब्रह्मणिचांजसारतिः २५ यदारतिर्ब्रह्मणिनैष्ठिकीपुमानाचार्यवान्ज्ञा**
**नविरागरंहसा दहत्यवीर्यंहृदयंजीवकोशंपंचात्मकंयोनिमिवोत्थितोग्निः २६**
**दग्धाशयोमुक्तसमस्ततद्गुणोनैवात्मनोबहिरंतर्विचष्टे परात्मनोर्यद्व्यवधानंपुर**
**स्तात्स्वप्नेयथापुरुषस्तद्विनाशे २७ ॥**

हसमंयथानभवत्येवंहृदयंदहतिशेषंसमानम् २६ ततः
किमतआहदग्धःआशयोहृदयमुपाधिर्यस्यअतएवमुक्ताःसमस्तास्तद्गुणाःकर्तृत्वादयोयेनआत्मनःसकाशा
द्बहिर्घटादिःअंतःसुखदुःखादिनैवविचष्टेनपश्यत्येवकुतइत्यपेक्षायांद्रष्टृदृश्यप्रतीतेरंतःकरणहेतुत्वादित्या
हपरोदृश्यःआत्माद्रष्टातयोर्यद्व्यवधानंभेदकंपूर्वमासीत्तस्यविनाशेसतियथास्वप्नेराजाहमित्यारोपितंसैन्यादि
द्रष्टारंदृश्यसैन्यंचस्वप्नावस्थानाशेनपश्यतितद्वत् २७ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

द्रष्टृदृश्यभेदप्रतीतेरंतःकरणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति आत्मानमिति आत्मानंद्रष्टारंइंद्रियार्थंद्र
श्यंउभयोस्तयोःपरंसंबंधहेतुमहंकारंचआश्रयेंऽतःकरणेसत्येवजाग्रत्स्वप्नयोःपश्यति अन्यदासुषुप्तौनतदुक्तं
दृश्यानुरंजितंद्रष्टृदृश्यंद्रष्ट्रनुरंजितं अहंवृत्तोभयंरक्तंतन्नाशेद्वैतनात्मनइति २८ एकस्मिन्नात्मनिदृश्यादिभेदप्र
तीतिरौपाधिकीत्तिभेददृष्टांतेनस्पष्टयतिनिमित्तइतिलोकेपिचसर्वत्रजलदर्पणादौभेदनिमित्तेसत्येवआत्म

आत्मानमिंद्रियार्थंञ्चपरंयदुभयोरपि सत्याशयउपाधौवैपुमान्पश्यतिनान्यदा
२८ निमित्तेसतिसर्वत्रजलादावपिपूरुषः आत्मनश्चपरस्यापिभिदांपश्यतिना
न्यदा २९ इंद्रियैर्विषयाकृष्टैराक्षिप्तंध्यायतांमनः चेतनांहरतेबुद्धेःस्तंव स्तोयमि
वह्रदात् ३० भ्रश्यत्यनुस्मृतिश्चित्तंज्ञानभ्रंशःस्मृतिक्षये तद्रोधंकवयःप्राहुरात्मा
पह्नवमात्मनः ३१॥ ऽ नोबिंबस्यचभेदंपश्यतिनतुजलाद्यभा
वे २९ तदेवंचतुर्भिःसंज्ञात्मात्मनोर्भेदहेतुत्वमुक्तम् इदानीमनात्मरतेःसंसारहेतुत्वमाह इंद्रियैरितिचतुर्भिः
ध्यायतांगुणारोपणस्मरतांपुसानिंद्रियाणिस्वैस्वैर्विषयैराकृष्यंतेतैश्चमनःआकृष्यतेविषयासक्तिंप्राप्यतेतच्च
बुद्धेःसकाशात्तद्धर्मचेतनाविचारसामर्थ्यंहरति एतच्चाविवेकिनानलक्ष्यतइतिदृष्टांतेनाहतीरजःकुशा
दिस्तंबोयथामूलैस्तोयंह्रदादपहरन्नितद्वत् ३० चित्तंचेतनामनुतस्यामुपहतायांस्मृतिःपूर्वापरानुसंधानंभ्र
श्यतिएवंतद्रोधज्ञानभ्रंशआत्मनएवहेतोरात्मनोऽपह्नवंतंनाशंप्राहुः ३१॥ ३१ ॥ ६ ॥ ८ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एवंभूतो नाशो भवतु ततः किमित्यत आह यद्धियमधिकृत्यान्यस्य विषयस्य प्रियतमत्वं आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः तस्यात्मनः स्वेनैव यो व्यतिक्रमोऽपह्नवः तस्माद्यः स्वार्थनाशः अतः परतरः स्वार्थनाशो नास्ति ३२ कुत इत्यत आह अर्थस्याभिध्यानमिंद्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः ज्ञानं च विज्ञानं च परोक्षापरोक्षं येन ध्याने

नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः यदध्यन्यस्य प्रेयस्त्वमात्मनः स्वव्यतिक्रमात् ३२ अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम् ३३ न कुर्यात्कर्हिचित्संगं तमस्तीव्रं तितीरिषुः धर्मार्थकाममोक्षाणां यदत्यंतविघातकम् ३४ तत्रापि मोक्ष एवार्थ आत्यंतिकतयेष्यते त्रैवर्ग्योऽर्थो यतो नित्यं कृतांतभयसंयुतः ३५ परेऽवरे च ये भावा गुणव्यतिकरादनु न तेषां विद्यते क्षेममीशविध्वंसिताशिषाम् ३६ तत्त्वं नरेंद्र जगतामथ तस्थुषां च देहेंद्रियासुधिषणात्मभिरावृतानाम्॥

७ न मुख्यतां स्थावरतां ३३ अनात्मरतेरनर्थहेतुत्वमुक्त्वा संगस्याप्याह नेति यद्वस्तु धर्मादीनां विघातकं तस्मिन्संगं तमः संसारम् ३४ तुल्यवन्निर्देशात्पुरुषार्थसाम्यभ्रांतिं वारयति तत्रापीति कृतांतः कालः ३५ भयसंयुतत्वमेवाह परे ब्रह्मादयः अवरे अस्मदादयः गुणक्षोभादनु पश्चाद्भवंति ईशः कालस्तेन विध्वंसिता आशिषो येषाम् ३६ यस्मादनात्मरतिर्नर्थहेतुः तत्तस्माज्जगतां जंगमानां तस्थुषां स्थावराणां च देहादिभिरात्मनाऽहंकारेणावृतानां हृदि।



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यश्चकास्तिप्रकाशतेतमवेहिकथंसोऽस्मीतिसोऽस्तीतिपाठेसएवैकोऽस्तिततोऽन्यदसदित्यर्थः ननुजीवोहृदिचका॰
स्तिनान्यस्तत्राह क्षेत्रविदंजीवंतपतिनियमयतीतिक्षेत्रवित्तपस्तस्यभावस्तत्तातयाअंतर्यामिरूपेणयद्वाक्षेत्रवित्ते
अहंममतास्पदेपातीतिक्षेत्रवित्तपस्तेनरूपेणजीवस्तुपारतंत्र्यान्नपातिननुकर्मजीवंनियच्छतिनआविःप्रत्यक्ष
तर्हिबुद्धिःनप्रत्यक्प्रतिलोमंचकास्तिबुद्धिस्तुपराग्विषयाकारेणतर्ह्यहंकारःनविषक्व्याप्तत्वेनसतुपरिच्छि
न्नः एवंभूतोयोभगवान्तमवेहीति ३७ स्थावरजंगमादीनांहृदिचकास्तीत्युक्ते तेषांसत्वंतत्संबंधादीश्वरस्याभा

यःक्षेत्रवित्तपतयाहृदिविषगाविःप्रत्यक्चकास्तिभगवांस्तमवेहिसोऽस्मि ३७॥
यस्मिन्निदंसदसदात्मतयाविभातिमायाविवेकविधुतिस्रजिवाऽहिबुद्धिःतंनि॰
त्यमुक्तपरिशुद्धविबुद्धतत्त्वप्रत्यूढकर्मकलिलप्रकृतिंप्रपद्ये ३८ यत्पादपंकजप
लाशविलासभक्त्याकर्माशयंग्रथितमुद्ग्रथयंतिसंतः॥ [illegible]लिन्यंचप्रसक्तंनिराकुर्वन्नुद्दिक्त

भक्त्यातंप्रणमति यस्मिन्निदंविश्वंसदसदात्मतयाउत्कृष्टभावेनकार्यकारणभावेनवामायैवविभातितंप्रपद्येमा॰
यात्वेहेतुः विवेकेनविधुतिर्निराकृतिर्यस्यतत् स्रजिवेतिदृष्टांतेनित्यमुक्तंयतःपरिशुद्धंतत्कुतःविबुद्धंतत्त्वं
सत्यंअतएवप्रत्यूढाअभिभूताकर्मभिःकलिलामलिनाप्रकृतिर्येनतम् ३८ तमवेहीतिज्ञानमुपदिष्टंतस्यदुष्क
रत्वेनभक्तिमुपदिशतिद्वाभ्यांयस्यपादपंकजयोःपलाशानिअंगुलयःतेषांविलासःकांतिःतस्यभक्त्यास्मृत्याकर्मा
शयंअहंकाररूपंहृदयग्रंथिंकर्मभिरेवसंग्रथितंरिक्तानिर्विषयामतिर्येषांरुद्धःप्रसादितःस्रोतोगणःइंद्रियवर्गोयैः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अरणं शरणमर्णं नन्तु ब्रह्मविदाप्नोति परमिति श्रुतेः कथं यतयो नीरूपयंतीत्युच्यते तत्राह कृच्छ्र इति अप्लवेशान्न प्लवस्तरणहेतुः ईट्‌ ईशो ये षां तेषां महानिह तरणे कृच्छ्रः क्लेशः ते हि अस्पृष्टेन योगादिना इंद्रियषड्वर्गग्राहं भवार्णवं तितीर्षंति तत्तस्मात्त्वं उडुपं प्लवं दुस्तरार्णवमित्यर्थः यद्वा अर्णशब्दे वकाराभाव आर्षः दुस्तरोदकरूपं व्यसनमित्यर्थः ४०

**तद्वन्तरिक्तमतयो यतयोऽपि रुद्धस्त्रोतोगणास्तमरणं भज वासुदेवम् ३९ कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीरिषंति तत्त्वं हरेर्भगवतो भजनीयमंघ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ४० मैत्रेय उवाच स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा दर्शितात्मगतिः सम्यक्प्रशस्योवाच तं नृपः ४१ श्रीराजोवाच॥ कृतो मेऽनुग्रहः पूर्वं हरिणार्त्तानुकंपिना तमापारयितुं ब्रह्मन्भगवन्यूयमागताः ४२ निष्पादितं च कार्त्स्न्येन भगवद्भिर्घृणालुभिः साधूच्छिष्टं हि सर्वं मे आत्मना सह किं ददे ४३ प्राणा दाराः सुता ब्रह्मन्गृहाश्च सपरिच्छदाः॥** ५ आत्ममेधसा ब्रह्मविदा दर्शिता। आत्मनो गतिस्तत्त्वं येन सः ४१ ब्रह्मन्निति संबोधनं प्राधान्यादेकस्य यूयमित्युक्तिः सर्वान्प्रति ४२ आत्मना देहेन सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयं सत् मत्यं प्रसादरूपेण दत्तं अतस्तत्र ममस्वत्वाभावात् गुरुदक्षिणार्थं किं ददे न हि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ४३ निवेदनं तु तदीयस्येव समर्पणं यथाभ्यासोरा

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तथामयापिसर्वंनिवेदितंस्वीकुरुतेसाहम्राणाइति ४४ आत्मनःस्वत्वाभावंप्रपंचयतिसेनापत्यंचेतिद्वाभ्याम् ४५
वस्तेपरिधत्ते अन्नमात्रंकेवलंभुंजतेनतुदानेस्वतंत्राः ४६ सत्यपिस्वत्वेसर्वस्वेनापिनगुरोःप्रत्युपकर्तुंतेशक्यमित्या
हयेरिति आत्मवादे अध्यात्मविचार एकान्ततोनिश्चयेननिगमिभिःवेदविद्भिःतेनित्यमनल्पकरुणाःस्वकृतेने

राज्यंमहीबलंकोशइतिसर्वन्निवेदितम् ४४ सेनापत्यंचराज्यंचदंडनेतृत्वमेवच
सर्वलोकाधिपत्यंचवेदशास्त्रविदर्हति ४५ स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वंददाति
च तस्यैवानुग्रहेणान्नंभुंजतेक्षत्रियादयः ४६ येरीदृशीभगवतोगतिरात्मवादे एका
न्ततोनिगमिभिःप्रतिपादितानःतुष्यंत्वदभ्रकरुणाःस्वकृतेननित्यंकोनामतत्प्र
तिकरोतिविनोदपात्रम् ४७ श्रीमैत्रेयउवाच तआत्मयोगमतयआदिराजेनपूः
जिताःशीलंतदीयंशंसंतःखेऽभूवन्मिषतांनृणाम् ४८ वैन्यस्तुधुर्योमहतांसंस्थि
त्याऽध्यात्मशिक्षया आप्तकाममिवात्मानंमेनआत्मन्यवस्थितः ४९॥ ऽ वदीनोद्धरणक
र्मणातुष्यंतुकोनामतत्कृतमुपकारंप्रतिस्वयमुपकरोतिउदपात्रमंजलिंविनामयोंऽजलिरेवतेभ्योबद्धइत्य
र्थः यद्वाविनोदपात्रंउपहासास्पदंप्रत्युपकारेप्रवृत्तोजनानामुपहासास्पदंभवेदित्यर्थः ४७ खेऽभूवन्नाकाशमा
र्गेणोद्गताः ४८ धुर्योमुख्यःअध्यात्मशिक्षयासंस्थितिरेकाग्रतातयाआत्मन्यवस्थितःसन्मेने ४९॥ ४९ ॥ ९

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति ५० निर्विषंगः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिणमुदासीनं मन्वानोऽक रोदिति पूर्वेणैवान्वयः नासज्जत इत्युत्तरेण वा ५१। ५२ अर्चिषि भार्यायाम् ५३। ५४। ५५ सोमश्चासौ राजा च स इव भुवो

कर्माणि च यथाकालं यथादेशं यथाबलम् यथोचितं यथावित्त मकरोद्ब्रह्मसात्कृत म् ५० फलं ब्रह्मणि विन्यस्य निर्विषंगः समाहितः कर्माध्यक्षं च मन्वान आत्मानं प्र कृतेः परम् ५१ गृहेषु वर्त्तमानोपि स साम्राज्यश्रियाऽन्वितः नासज्जतेंद्रियार्थेषु नि रहंमतिरर्कवत् ५२ एवमध्यात्मयोगेन कर्माण्यनुसमाचरन् पुत्रानुत्पादयामास पं चार्चिष्यात्मसंमतान् ५३ विजिताश्वं धूम्रकेशं हर्यक्षं द्रविणं वृकम् सर्वेषां लोकपा लानां दधारैकः पृथुर्गुणान् ५४ गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः मनोवा ग्वृत्तिभिः सौम्यैर्गुणैः संरंजयन्प्रजाः ५५ राजेत्यधान्नामधेयं सोमराज इवापरः सूर्यव द्विसृजन्गृण्हन्प्रतपंश्च भुवो वसु ५६ दुर्धर्षस्तेजसेवाग्निर्महेंद्र इव दुर्जयः तितिक्ष याधरित्रीव द्यौरिवाभीष्टदो नृणाम् ५७ वर्षति स्म यथाकामं पर्जन्य इव तर्पयन् समुद्र इ व दुर्बोधः सत्येनाऽचलराडिव ५८॥ भुवो वसु धनं गृण्हन् विसृजंश्चासौ सूर्यवत् राज्ञः प्रतपनमाज्ञाकरणं ५६ अग्निरिव दुर्द्धर्षः द्यौः स्वर्ग इव ५७ समुद्रो यथा गांभीर्येणेतावानिति न बुध्यते तथाऽसावभिप्रायतो दुर्बोधः अचलराट् मे

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

।५९ सर्वात्मासर्वत्रसंचारशक्तिर्बलादिभिर्मातरिश्वेवभूतराट् श्रीरुद्रः ६० अजोब्रह्मैव ६१ आत्मवत्त्वेजितेंद्रियत्वेभक्त्या दिभिः परार्थोद्यमेचात्मनैवतुल्यः निरुपमः ६२ पुंभिः सत्पुरुषैः रामः सीतापतिर्यथासतांकर्णरंध्रेषुप्रविष्टः ६३॥ इति।

धर्मराडिवशिक्षायामाश्चर्येहिमवानिव कुबेरइवकोशाढ्योगुप्तार्थोवरुणोयथा ५९। मातरिश्वेवसर्वात्माबलेनसहसौजसा अविषह्यतयादेवोभगवान्भूतराडिव ६० कं दर्पइवसौंदर्येमनस्वीमृगराडिव वात्सल्येमनुवन्नृणांप्रभुत्वेभगवानजः ६१ बृहस्प तिर्ब्रह्मवादेआत्मवत्त्वेस्वयंहरिः भक्त्यागोगुरुविप्रेषुविष्वक्सेनानुवर्तिषु ह्रियाप्रश्र यशीलाभ्यामात्मतुल्यःपरोद्यमे ६२ कीर्त्योर्द्ध्वगीतयापुंभिस्त्रैलोक्येतत्रतत्रह प्रवि ष्टःकर्णरंध्रेषुस्त्रीणांरामःसतामिव ६३॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे। पृथुचरितेद्वाविंशोध्यायः २२॥ मैत्रेयउवाच दृष्ट्वात्मानंप्रवयसमेकदावैन्यआत्म। वान् आत्मनावर्धिताशेषस्वानुसर्गःप्रजापतिः १ जगतस्तस्थुषश्चापिवृत्तिदोधर्म

श्रीचतुर्थस्कंधटीकायांद्वाविंशः २२॥ त्रयोविंशेसभार्यस्यवनेनित्यसमाधितः विमान॥ ((भृत्सताम॥ ६२॥ माधिरुह्याथवैकुंठगतिरीर्यते १ प्रवयसंवृद्धंदृष्ट्वातपोवनमगादितित्तृतीयेनान्वयः स्वकृतोऽनुसर्गअन्नादिसर्गःपु रग्रामादिसर्गश्चवर्द्धितःअशेषःस्वानुसर्गोयेन १ निष्पादितईश्वरादेशःप्रजापालनादिर्येन॥ ॥

तदर्थंजज्ञिवान्जातःआविर्भूतइति २ आत्मजांपृथ्वीम् विमनस्कश्चिंतातुराश्चप्रजाश्चसदारःसभार्यःतपोवनमगादिति ३ अदाभ्याविघ्नैर्नाशयितुमशक्यानियमायस्यवानप्रस्थानांचसंमतेउग्रेतपसिआरब्धःप्रवृत्तःकर्त्तारिक्तःयथास्वस्यधरामंडलस्यविजयेपूर्वंमहताप्रयत्नेनप्रवृत्तःतथेति ४ उग्रंतपोदर्शयति कंदमूलेतित्रिभिः

निष्पादितेश्वरादेशोयदर्थमिहजज्ञिवान् २ आत्मजेष्वात्मजान्यस्यविरहाद्रुदतीमिव प्रजाश्चविमनःस्वेकःसदारोऽगात्तपोवनम् ३ तत्राप्यदाभ्यनियमोवैखानससंमते आरब्धउग्रतपसियथास्वविजयेपुरा ४ कंदमूलफलाहारी शुष्कपर्णाशनःक्वचित् अब्भक्षःकतिचित्पक्षान्वायुभक्षस्ततःपरम् ५ ग्रीष्मेपंचतपाधीरोवर्षास्वाऽसारषाण्मुनिः आकंठमग्नःशिशिरउदकेस्थंडिलेशयः ६ तितिक्षुर्यतवाग्दांतऊर्ध्वरेताजितानिलः आरिराधयिषुःकृष्णमचरत्तपउत्तमम् ७ तेनक्रमानुसिद्धेनध्वस्तकर्माऽमलाशयः प्राणायामैःसंनिरुद्धषड्वर्गश्छिन्नबंधनः ८ सनत्कुमारोभगवान्यदाहाध्यात्मिकंपरम् योगंतेनैवपुरुषमभजत्पुरुषर्षभः ९ ॥ क्वचित्कदाचित् ५ चतुर्दिक्षुचत्वारोऽग्नयःउपरिसूर्यइतिपंचानांतपःसंतापोयस्यसपंचतपाःआसारंसहतइत्यासारषाट् शिशिरेऋतौस्थंडिलेशयः भूमिशयनःसर्वदा ६।७ तेनतपसाक्रमानुसिद्धेनशनैःप्राप्तेनध्वस्तानिकर्माणियस्य

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

१० परिकर्मणा परिचर्यया शुद्धसत्व आत्मा मनो यस्य तस्य ज्ञानमभूत् कीदृशं येन निजमुपाधिं जीवकोशं हृदयग्रंथिं संशयानां असंभावनादीनां परमाश्रयं चिच्छेद कीदृशेन अनया भक्त्या निशितेन कथंभूतया तस्य भगवतः अनुसंस्मरणेनानुपूर्त्तिः संपूर्त्तिर्यस्याः तया निशितेन ११ किंच छिन्ना अन्यधीर्देहात्मबुद्धिर्यस्य यतोऽधिगतात्मगतिः अत एव निरीहः प्राप्तास्वसिद्धिषु निःस्पृहः येन वयुनेन ज्ञानेन इदं संशयपदं चिच्छेद तत्तत्यजे त्यक्तवान् तस्य यत्नादप्यु

भगवद्धर्मिणः साधोः श्रद्धयायततः सदा भक्तिर्भगवति ब्रह्मण्यनन्यविषयाऽभवत् १० तस्यानया भगवतः परिकर्मशुद्धसत्वात्मनस्तदनुसंस्मरणानुपूर्त्या ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ११ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन येन तावन्न योगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासु रतिं न कुर्यात् १२ एवं स वीरप्रवरः संयोज्यात्मानमात्मनि । ब्रह्मभूतो दृढं काले तत्याज स्वकलेवरम् १३ संपीड्य पायुं पार्ष्णिभ्यां वायुमुत्सारयञ्छनैः ॥

परराम इत्यर्थः तस्य योगसिद्धिष्वपि निस्पृहत्वं युक्तमेवेत्याह तावन्नाप्रमत्तः किंतु प्रमत्तो भवति तस्य श्रीकृष्णकथारतत्वात् न तासु लोभो जात इत्यर्थः १२ । १३ देहत्यागप्रकारमाह संपीड्येति पंचभिः पायुं गुदं संपीड्येति मुक्तासनं सूचितम् संपीड्य सीवनीं सूक्ष्मां गुल्फेनैव तु मध्यतः सव्ये दक्षिणगुल्फेन मुक्तासनमितीरितं मूला

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कोष्ठेषु वस्थाप्य अयूयुजदित्युत्तरेणान्वयः कोष्ठान्येवाह हृदादीनां हृदे कंठं शीर्षं भ्रूमध्यं तस्मिन् १४ तं वायुं पाठान्तरे एवम्
सून् प्राणान् उत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरंध्रे आवेश्य ततो देहारंभकं पंचभूतानि समष्टिभूतेषु विलापितवान् तदाह वायुं।
वायौ अयूयुजत् एकीकृतवान् कायं देहगतं कठिनांशं क्षितौ १५ खानि इंद्रियच्छिद्राणि द्रवांशं तोये तदेवं देहं प्रविलाप्या द्वि
तीयात्मप्रतिपत्त्यर्थं महाभूतानामपि लयमाह क्षितिमंभस्येकीकृतवान् तदंभैः अद्भिस्तेजः अमुं वायुम् १६ तदेवं तामसा
हंकारकार्य्यस्याकाशपर्यंतस्य लयमुक्त्वा सात्विकराजसाहंकारकार्याणां लयमाह इंद्रियेष्विति इंद्रियेषु मन इति देवा

**नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरःकंठशीर्षणि १४ उत्सर्पयंस्तु तं मूर्ध्नि क्रमेणावेश्य निस्पृ।
हः वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् १५ खान्याकाशे द्रवं तोये यथास्थानं वि
भागशः क्षितिमंभसि तत्तेजस्यदो वायौ नभस्यमुम् १६ इंद्रियेषु मनस्तानि तन्मात्रे।
षु यथोद्भवम् भूतादिनाऽमून्युत्क्षिप्य महत्यात्मनि संदधे १७॥**

नामप्युपलक्षणं सविकल्प।
कज्ञानेन मनस इंद्रियैराकर्षणात् तेषु लयाभिधानं न तु कार्यत्वात् तदुक्तं गीतासु इंद्रियाणां हि चरतां यन्मनोऽनुवि
धीयते इति अत्र च इंद्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मन इति इंद्रियेषु नभ इति पाठेप्ययमर्थः भट्टादीनां मतेन नभश्चास्म
षं केषां चिन्मानसं आनुमानिकत्वमतेऽपीन्द्रियव्यापारोऽस्त्येव नभो गुणश्च शब्दः श्रोत्रग्राह्यः अत इंद्रियग्राह्यत्वादिंद्रि।
येषु नभो विलापितमिति तानीन्द्रियाणि यथोद्भवं उद्भवोऽत्र वृद्धिलाभः स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादि
षु लयः यद्वा तन्मात्रकार्याण्येवेंद्रियाणि मनोऽप्यपंचीकृतपंचतन्मात्रकार्यं आहंकारिकत्वाभिधानं तु तदधीनत्वविवक्षये

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२३
भा०च०
टी०
८७

जलेआप्लुतास्नातासतीभर्त्तुरुदकंदत्त्वादिविअंतरिक्षेस्थितान्नत्वावह्निंत्रिःप्रदक्षिणीकृत्य२२देवैःसहिताः२३।
गृणंतिस्मअभाषंत२४।२५।२६भगवान्पद्यतेगम्यतेनेनेतितथातन्नैष्कर्म्यंज्ञानंयेचंचलायुषोऽपिसाधयंतितेषां

नत्वादिविस्थांस्त्रिदशांस्त्रिःपरीत्यविवेशवह्निंध्यायतीभर्त्तृपादौ२२विलोक्यानुगतां
साध्वींपृथुंवीरवरंपतिम्तुष्टुवुर्वरदादेवैर्देवपत्न्यःसहस्रशः२३कुर्वत्यःकुसुमा
सारंतस्मिन्मंदरसानुनि नदत्स्वमरतूर्येषुगृणंतिस्मपरस्परम्२४देव्यऊचुःअ।
होइयंवधूर्धन्यायाचैवंभूभुजांपतिम्सर्वात्मनापतिंभेजेयज्ञेशंश्रीर्वधूरिव२५सै
षानूनंव्रजत्यूर्ध्वमनुवैन्यंपतिंसती पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येनकर्मणा२६
तेषांदुरापंकिंत्वन्यन्मर्त्यानांभगवत्पदम्भुविलोलायुषोयेवैनैष्कर्म्यंसाधयंत्युत
२७स वंचितोवतात्मध्रुक्कृच्छ्रेणमहताभुवि लब्ध्वापवर्ग्यंमानुष्यंविषयेषुवि।
षज्जते२८मैत्रेयउवाच स्तुवंतीष्वमरस्त्रीषुपतिलोकंगतावधूः यंवाआत्मविदां।
धुर्योवैन्यःप्रापाऽच्युताश्रयः२९॥इत्थंभूतानुभावोऽसौपृथुःपृथुपराक्रमः॥

७मन्यद्देवादिपदंकिंसुदुर्लभंनकिंचिदित्यर्थः२७अभक्तंशोचंतिसवंचितइतियतआत्मनेद्रुह्यतियोपवर्गसाधनंमानुष्यंल।
ब्ध्वापिविषयेष्वासक्तिंयाति२८।२९॥ २९॥

रामः
८७

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भूतादिनाऽहंकारेण प्रागवशिष्टेन भः सहितानीन्द्रियाणि उत्कृष्य परतो नीत्वा भूतादौ क्षिप्त्वा तेन सह महत्तत्त्वे संदः
धेदित्यर्थः १७ सर्वेषां गुणानां कार्याणां विन्यासः स्थितिर्यस्मिन् तं महान्तं मायामये मायोपाधिप्रधाने जीवे तं चानुशय
मुपाधिं यः पूर्वमनुशायी पुमान् जीवः असौ पृथुः ब्रह्मणि स्थितः सन् जहात् इत्यर्थः १८ वनप्रवेशमारभ्य राज्ञः कथा
माह अर्चिर्नामेति चतुर्भिः अनुगता अनुजगाम अतदर्हा तदपि नार्हति या किं पद्भ्यां भुवः स्पर्शनमिति यत् १९ भर्त्तु

तं सर्वगुणविन्यासं जीवे मायामयेऽन्यधात् तं चानुशयमात्मस्थमसावनुशायी पुमान्
ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽजहात्प्रभुः १८ अर्चिर्नाम महाराज्ञी तत्सत्न्यऽनुगता
वनम् सुकुमार्य्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः १९ अतीव भर्त्तुर्व्रतधर्मनिष्ठया शुश्रू
ूषया चारुषदेहयात्रया नाविंदतार्त्तिं परिकर्षितापि सा प्रेयस्करस्पर्शनमाननिर्वृ
तिः २० देहं विपन्नाखिलचेतनादिकं पत्युः पृथिव्या दयितस्य चात्मनः आलक्ष्य किं
चिच्च विलप्य सा सती चितामथारोपयदद्रिसानुनि २१ विधाय कृत्यं ह्रदिनीजलाप्लु
तादत्त्वोदकं भर्त्तुरुदारकर्मणः ॥ २२ व्रतं यद्भूमिशयनादि तस्मिन् धर्मे या निष्ठा तया ऋषीणामिय मा
र्षी देहयात्रा कंदमूलादिवृत्तिस्तया च आर्त्तिं दुःखं न प्राप तत्र हेतुः प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृतिर्य
स्याः २० पृथिव्याः पत्युः दुहितृत्वं तु तस्या देवतारूपेण विपन्नं नष्टमखिलं चेतनादिकं यस्मिन् तथाभूतम् देहमाल
क्ष्य तद्देहं चितामारोपयत् २१ कृत्यं तत्कालोचितं विधाय ह्रदिन्याः ॥ ७ ॥ ७ ॥ ९ ॥ ७ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

३०। ३१ विशांपश्वादीनां वैश्यादीनां वापतिःस्यात् ३२। ३३। ३४। ३५। ३६ यद्यपिबहूनिफलानिभवंतितथापिमुक्ता॥

कीर्त्तिंततस्यचरितमुद्दामचरितस्यते ३० यइदंसुमहत्पुण्यंश्रद्धयाऽवहितःपठेत्
श्रावयेत्शृणुयाद्वापिसपृथोःपदवीमियात् ३१ ब्राह्मणोब्रह्मवर्चस्वीराजन्योजग॥
तीपतिः वैश्यःपठन्विट्पतिःस्यात्शूद्रःसत्तमतामियात् ३२ त्रिःकृत्वइदमाक॥
र्ण्यनरोनार्यथवादृताः अप्रजःसुप्रजतमोनिर्धनोधनवत्तमः अस्पष्टकीर्त्तिःसु॥
यशामूर्खोभवतिपंडितः ३३ इदंस्वस्त्ययनंपुंसाममंगल्यनिवारणम् धन्यंयशस्य
मायुष्यंस्वर्ग्यंकलिमलापहम् ३४ धर्मार्थकाममोक्षाणांसम्यक्सिद्धिमभीप्सुभिः श्रद्ध
यैतदनुश्राव्यंचतुर्णांकारणंपरम् ३५ विजयाभिमुखोराजाश्रुत्वैतदनुयातियान् बलिं
तस्मैहरंत्यग्रेराजानःपृथवेयथा ३६ मुक्तान्यसंगोभगवत्यमलांभक्तिमुद्वहन् वैन्यस्य
चरितंपुण्यंशृणुयात्श्रावयेत्पठेत् ३७ वैचित्रवीर्याभिहितंमहन्माहात्म्यसूचकम् अ
स्मिन्कृतमतिर्मर्त्यःपार्थवींगतिमाप्नुयात् ३८ अनुदिनमिदमादरेणशृण्वन् पृथुचरितं॥
प्रथयन्विमुक्तसंगः भगवतिभवसिंधुपोतपादेसचनिपुणांलभतेगतिंमनुष्यः ३९

न्यसंगएवश्रवणादिकुर्यात् ३७ महतोभगवतोमाहात्म्यसूचकंपार्थवींपृथुसंबंधिनींपार्थिवींमितिपाठः ३८ प्रथयन्की
र्तयन्भवसिंधोपोतःपादोयस्य ३९ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

॥इतिश्रीचतुर्थस्कंधेटीकायांत्रयोविंशः २३॥एकादशभिरध्यायैःपृथोश्चरितमीरितम् प्रचेतसामथाशाभि स्तन्मध्ये पंचभिःपितुः१ चतुर्विंशेप्रपौत्रात्तुपृथोःप्राचीनबर्हिषःप्रचेतसांजनिस्तेभ्योरुद्रगीतंचवर्ण्यते २अधिराजआसीदित्यर्थः यवीयेभ्यःकनिष्ठेभ्यःकाष्ठादिशः१ तुर्यांचतुर्थीम् २ शक्राल्लब्धावरमंतर्धानसंज्ञितोबभूवपृथोरश्वमेधेऽश्ववि

इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेत्रयोविंशोऽध्यायः २३॥मैत्रेयउवाच विजिताश्वोऽधिराजासीत्पृथुपुत्रःपृथुश्रवाः यवीयेभ्योऽददात्काष्ठाभ्रातृभ्योभ्रातृवत्सलः १हर्यक्षायादिशत्प्राचीं धूम्रकेशायदक्षिणाम् प्रतीचींवृकसंज्ञायतुर्यांद्रविणसेविभुः २॥ अंतर्धानगतिंशक्राल्लब्ध्वांतर्धानसंज्ञितः अपत्यत्रयमाधत्तशिखंडिन्यांसुसंमतम् ३ पावकःपवमानश्चशुचिरित्यग्नयःपुरा वसिष्ठशापादुत्पन्नाःपुनर्योगगतिंगताः। ४ अंतर्धानोनभस्वत्यांहविर्धानमविंदत यइंद्रमश्वहर्तारंविद्वानपिनजघ्निवान् ५॥ राज्ञांवृत्तिंकरादानदंडशुल्कादिदारुणाम् मन्यमानोदीर्घसत्रव्याजेनविससर्जह६

जयावसरे ३ अपत्यत्रयमेवाहपावकइतिपुरायःशापःतस्मान्मनुष्येषूत्पन्नाःसंतःयोगगतिंअग्नित्वंप्राप्ताः४ नभस्वत्यामन्यस्यांभार्यायांअंतर्धानस्यविशेषणंयइतिएतेनशक्रादंतर्धानगतिलाभेकारणमुक्तम् ५सचान्तर्धानोराज्ञांवृत्तिंकरादानादिभिर्दारुणांपरपीडात्मकांमन्यमानोविससर्जह६॥ ६॥ ७॥ ८॥ ९॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हंति स्वानां क्लेशमिति हंसः तं पुरुषं पूर्णं कुशलं पुण्यं तद्रूपेण समाधिना ७।८ हाविर्धानिः हविर्धानस्य पुत्रः योगेषु च प्राणा-
यामादिषु ९ क्रियाकांडनिष्णातत्वमाह यस्येति इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्रैकोयज्ञः कृतः न तत्समी-
प एव यज्ञांतरं कुर्वतः सतः अत एव प्राचीनबर्हिरित्युच्यते १० समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नाम किशो-
रीं बालां परिक्रमंतीं प्रदक्षिणं गच्छंतीं शुकीमिवेति एवं व्याख्याय ते सप्तर्षीणां सत्रे तद्भार्यादर्शनेनाग्निः कामसंतप्तोऽ

तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् यजंस्तल्लोकतामाप कुशलेन समाधिना ७ ह-
विर्धानाद्धविर्धानी विदुराऽसूत षट्सुतान् बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रत-
म् ८ बर्हिषत्सुमहाभागो हाविर्धानिः प्रजापतिः क्रियाकांडेषु निष्णातो योगेषु च कुरू-
द्वह ९ यस्येदं देवयजनमनुयज्ञं वितन्वतः प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधा-
तलम् १० सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् यां वीक्ष्य चारुसर्वांगीं किशोरीं सुष्ठ्व-
लंकृताम् परिक्रमंतीमुद्वाहे चकमेऽग्निः शुकीमिव ११ विबुधासुरगंधर्वमुनिसि-
द्धनरोरगाः॥

ऽभूत् तं च तद्भार्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास रमयित्वा च तद्रेतः शुकीरू-
पेण शरस्तंबे निधाय आगच्छत् तां यथा सप्तर्षिभार्याभ्रांत्याऽग्निः कामितवान् तद्वदिति स्तुकीमिवेति पाठे स्तोक घृतधाराभि-
वेत्यर्थः ११ सूर्यं यानवोढयैव विबुधादयो विजिताः अभिभूताः तच्च नूपुरैः॥ ॥ ॥ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पादोत्क्वणयंत्यैव ध्वनिमात्रेणेत्यर्थः १२ तुल्यंनामव्रतमाचारश्चयेषां धर्मस्नाताः धर्मपारगाः १३ तपसा तपसां पतिं हरिम र्चं न् अर्च्चयामासुः १४। १५। १६ मुनयोऽपि संगत्यागेना चुमिच्छंयंदध्युरेव केवलंनतुप्रापुः तेनशिवेन २७ ननुमु

विजिताः सूर्ययादिक्ष्वक्वणयंत्यैवनूपुरैः १२ प्राचीनबर्हिषः पुत्राः शतद्रुत्यांदशाऽभवन् तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः १३ पित्रादिष्टाः प्रजासर्गे तपसेऽर्णवमाविशन् दशवर्षसहस्राणि तपसाऽर्च्चंस्तपस्यतिम् १४ यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता तद्ध्यायंतो जपंतश्च पूजयंतश्च संयताः १५ विदुर उवाच प्रचेतसां गिरित्रेणयथासीत्पथि संगमः यद्वाप्याह हरः प्रीतस्तन्नो ब्रह्मन्वदार्थवत् १६ संगमः खलु विप्रर्षे शिवेनेह शरीरिणाम् दुर्लभो मुनयो दध्युरसंगाद्यमभीप्सितम् १७ आत्मारामोपि यस्त्वस्य लोककल्पस्य राधसे शक्त्यायुक्तो विचरति घोरया भगवान्भवः १८ मैत्रेय उवाच प्रचेतसः पितुर्वाक्यं शिरसादाय साधवः दिशं प्रतीचीं प्रययुस्तपस्यादृतचेतसः॥ १९ समुद्रमुपविस्तीर्णमपश्यन्सुमहत्सरः॥ ॥

नीनां किं तद्ध्यानेन घोरत्वादित्याशंक्याह आत्मारामोपि लोकरचनायाः पालनाय १८ गुर्वाज्ञाकरिणी शिवदर्शनं स्वत एव भवतीत्याशयेनाह प्रचेतस इति १९ समुद्रमुपसमुद्रात् किंचिन्न्यूनं उपोधिके चेति कर्मप्रवचनीयः॥ ॥ ॥ ॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्रसन्नाः सलिलाशयाः मत्स्यादयो यस्मिन् २० नीलोत्पलादीनां आकरं जन्मस्थानं उत्पलांभोजकल्हाराणि रात्रिदिनसंध्याविकासीनि इंदीवरं नीलोत्पलं तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थं हंसादिभिर्निकूजितं २१ मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लतांघ्रिपा यस्मिन् पद्मकोशरजो दिक्षु विक्षिपता पवनेनोत्सवो यस्मिन् २२ तत्र मृदंगपणवादिवाद्यम् अनु प॰

महन्मनइवस्वच्छंप्रसन्नसलिलाशयम् २० नीलरक्तोत्पलांभोजकल्हारेन्दीवराकरम् हंससारसचक्राह्वकारंडवनिकूजितम् २१ मत्तभ्रमरसौस्वर्यहृष्टरोमलतांघ्रिपम् पद्मकोशरजोदिक्षुविक्षिपत्पवनोत्सवम् २२ तत्र गांधर्वमाकर्ण्य दिव्यमार्गमनोहरम् विसिस्म्यू राजपुत्रास्ते मृदंगपणवाद्यनु २३ तर्ह्येव सरसस्तस्मान्निष्क्रामंतं सहानुगम् उपगीयमानममरप्रवरं विबुधानुगैः २४ तप्तहेमनिकायाभं शितिकंठं त्रिलोचनम् प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः २५ स तान्प्रपन्नार्तिहरो भगवान्धर्मवत्सलः धर्मज्ञान्छीलसंपन्नान्प्रीतान्प्रीतउवाच ह २६ ॥ २६ ॥ ९

श्चात् दिव्यैर्मार्गभेदैर्मनोहरं गांधर्वं गानमाकर्ण्य विस्मयं प्राप्ताः पाठांतरे मृदंगपणवादि अवत् रसत् तेषां ध्वनिमतिरस्कुर्वन्नित्यर्थः २३ ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः २४ तप्तहेमराशिसदृशकांतिं शितिर्नीलः कंठो यस्य तम् २५ । २६ ॥ २६ ॥ ९ ॥ ९ ॥ ९ ॥ राम॰

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विदिषदः चिकीर्षितंभगवदाराधनंविदितम् २७ अनुग्रहकारणमाह यःसाक्षाद्वासुदेवंप्रपन्नःसहिमेप्रियःकथं भूतंपरंहसःसूक्ष्मात्त्रिगुणात्प्रधानात्जीवसंज्ञितात्पुरुषाच्चपरंप्रकृतिपुरुषयोर्नियंतारमित्यर्थः २८ तत्किंतस्य महत्वादित्याह स्वधर्मनिष्ठःपुमान्बहुभिर्जन्मभिर्विरिंच्यतांप्राप्नोतिनतोपिपुण्यातिशयेनमामेतिभागवतस्तुअथ देहांते अव्याकृतंप्रपंचातीतंवैष्णवंपदमेति यथाहंरुद्रोभूत्वाआधिकारिकइववर्त्तमानः विबुधाःदेवाश्चाधिकारिकाः

**श्रीरुद्रउवाच यूयंवेदिषदःपुत्राविदितंवश्चिकीर्षितम् अनुग्रहायभद्रंवएवंमदर्श नंकृतम् २७ यःपरंरंहसःसाक्षात्त्रिगुणाज्जीवसंज्ञितात् भगवंतंवासुदेवंप्रपन्नःस प्रियोहिमे २८ स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंच्यतामेतिततःपरंहिमाम् अव्या कृतंभगवतोथवैष्णवंपदंयथाहंविबुधाःकलाऽत्यये २९ अथभागवतायूयंप्रियास्थ भगवान्यथा नमेभागवतानांचप्रेयानन्योस्तिकर्हिचित् ३० इदंविविक्तंजप्तव्यंपवि त्रंमंगलंपरम् निःश्रेयसकरंचापिश्रूयतांयद्वदामिवः ३१ मैत्रेयउवाच॥ ॥**

कलाऽत्यये अधिकारांतेलिंगभंगेसत्येषंति २९ अथभागवतत्वात्यूयंमेप्रियास्थभवद्भिरपिमयिप्रीतिःका र्येत्याशयेनाह नेमदन्योभागवतानांचप्रेयान्नास्ति ३० अतइदंजप्तव्यंश्रूयतामिति विविक्तमसंकीर्णंयथाभवति। सृष्ट्यादौब्रह्मणासृष्टापुत्रेभ्यः॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्रोक्तमिष्टदंस्तोत्रमाह प्रचेतोभ्यः कृपयाभगवान्शिव ३२ तेजितंतवोत्कर्षः आत्मविद्धुर्याणांस्वस्तयेशोभनसत्तायै। स्वानंदलाभायेत्यर्थः अतोमेस्वस्ति स्वानंदसत्ताऽस्तुननुममोत्कर्षोमदर्थएवकिंनस्यात्तत्राह भवताराधसास्वानंद रूपेणराद्धं सिद्धंत्वंपरमानंदरूपेणैवनित्यंस्थितइत्यर्थः अतःएवंभूतायात्मनेतुभ्यंनमः सर्वस्मैसर्वरूपायच ३३ सर्व रूपत्वंप्रपंचयन्प्रणमतिसार्द्धैर्दशभिः पंकजंलोकात्मकंनाभौयस्यतस्मैकारणात्मनेनमःकारणत्वादेवसूक्ष्मानांप्रा

इत्यनुक्रोशहृदयोभगवानाहतान्शिवः बद्धांजलीन्राजपुत्रान्नारायणपरोवचः ३२ श्रीरुद्रउवाच जितंतेआत्मविद्धुर्यस्वस्तयेस्वस्तिरस्तुमे भगवताराधसाराद्धंसर्वस्मा आत्मनेनमः ३३ नमःपंकजनाभायभूतसूक्ष्मेंद्रियात्मने वासुदेवायशांतायकू। टस्थायस्वरोचिषे ३४ संकर्षणायसूक्ष्मायदुरंतायांतकायच नमोविश्वप्रबोधाय। प्रद्युम्नायांतरात्मने ३५ नमोनमोऽनिरुद्धायहृषीकेशेंद्रियात्मने॥ ३६ ॥ ६ ॥

णिनांयेऽपाधयः भूतानिसूक्ष्माणितन्मात्राणिइंद्रियाणिचतेषामात्मनेनियंत्रेअंतःकरणचतुष्ट्याधिष्ठातृ। त्वेनप्रणमतिचतुर्भिः श्लोकार्द्धैः वासुदेवायचित्ताधिष्ठात्रेकूटस्थायनिर्विकारायचित्तस्यैकरूपत्वात् ३४ संक। र्षणायअहंकाराधिष्ठात्रेसूक्ष्मायअव्यक्तायदुरंतायअनंतायअंतकायमुखाग्निनालोकदाहकायविश्वस्यप्र ष्टोबोधोयस्मात्अंतरात्मनेबुद्ध्यधिष्ठात्रे ३५ हृषीकाणामीशंयदिंद्रियंमनः तदात्मनेसूर्यरूपेणप्रणमतिपरम

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हंसायसूर्यायपूर्णायतेजसाविश्वव्यापिनेनिभृतात्मनेक्षयवृद्धिशून्याय ३६ स्वर्गापवर्गद्वारायच शुचिर्न्यंतःकरणे
निषीदतीनि शुचिषतस्मै हंसःशुचिषदितिश्रुतेः हिरण्यवीर्ययस्यतस्मैअग्निरूपाय चातुर्होत्रंकर्मतस्मैतत्सा
धनायेत्यर्थःकुतः ततवेतद्विस्तारकाय ३७ सोमत्वमाहऊर्जेपितृणामन्नाय इषेदेवानामन्नाययज्ञरेतसेसोमा
यसहिपितृणांदेवानांचान्नंएवंरूपायत्रय्याःपतयेहरयेनमः सूर्याग्निसोमत्वेनैवतेजस्त्वमुक्तंजलत्वमाह सर्व

**नमःपरमहंसायपूर्णायनिभृतात्मने ३६ स्वर्गापवर्गद्वारायनित्यंशुचिषदेनमः ना॥
मोहिरण्यवीर्यायचातुर्होत्रायतंतवे ३७ नमऊर्जइषेत्रय्याःपतयेयज्ञरेतसे तृप्ति
दायचजीवानांनमःसर्वरसात्मने ३८ सर्वसत्वात्मदेहायविशेषायस्थवीयसे न॥
मस्त्रैलोक्यपालायसहओजोबलात्मने ३९ अर्थलिंगायनभसेनमोंतर्बहिरा॥
त्मने नमःपुण्यायलोकायअमुष्मैभूरिवर्चसे ४० प्रवृत्तायनिवृत्तायपितृदेवाय
कर्मणे॥**

रसात्मनेजलरूपाय ३८ विशेषायपृथिवीरूपायसर्वेषांसत्वानांप्राणिनांयेआत्मानःतेषांदे
हायस्थवीयसेविराड्देहायच त्रैलोक्यपालायवायवेसहआदिरूपायसहिप्राणरूपेणत्रैलोक्यंपालयतिसह
आदिधर्मायच ३९ नभसेआकाशायअर्थानांलिंगायज्ञापकायशब्दगुणत्वात् अंतर्बहिरात्मनेअंतर्बहिरा॥
लंबनायएवंमहाभूतरूपत्वमुक्तं अमुष्मैस्वर्गायभूरिवर्चसेएषवैज्योतिष्मंतंपुण्यलोकंयानीतिश्रुतेः ४० प्रवृ



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

यथाक्रमं पितृदेवप्राप्तिफलाय अधर्मफलरूपाय च मृत्यवे ४१ हे ईश आशिषां कारणात्मने सर्वकर्मफलदात्रे मनवे सर्वज्ञाय मंत्रात्मकायेति वा विष्णुत्वेन प्रणमति बृहते धर्माय परधर्मात्मने कृष्णाय ४२ रुद्ररूपेण प्रणमति मीढुषे रुद्राय अहंकृतमहंकारस्तदात्मने स च कर्तृकरणकर्मशक्तित्रयसमेतस्तस्मै ब्रह्मत्वेन प्रणमति चेतो ज्ञानमाकूतिः क्रियातद्रूपाय वाचां विविधा भूतिः सृष्टिर्यस्मात्तस्मै ४३ एवं नमस्कृत्य दर्शनं प्रार्थयते दर्शनमिति नवभिः भागवतैः सत्कृतं

**नमो धर्मविपाकाय मृत्यवे दुःखदाय च ४१ नमस्त आशिषामीश मनवे कारणात्मने नमो धर्माय बृहते कृष्णायाकुंठमेधसे पुरुषाय पुराणाय सांख्ययोगेश्वराय च ४२ शक्तित्रयसमेताय मीढुषेऽहंकृतात्मने चेतआकूतिरूपाय नमो वाचो विभूतये ४३ दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम् रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणांजनम् ४४ स्निग्धप्रावृड्घनश्यामं सर्वसौंदर्यसंग्रहं चार्वायतचतुर्बाहुसुजातरुचिराननम् ४५ पद्मकोशपलाशाक्षं सुंदरभ्रूसुनासिकम् सुद्विजं सुकपोलास्यं समकर्णविभूषणम् ४६॥**

दर्शनं देहीत्यस्य विवरणं रूपमित्यादि प्रदर्शयेत्यंतं स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः सर्वेषामिंद्रियाणां ये गुणा विषयास्तेषामंजनं व्यंजकं सर्वेन्द्रियविषयविषयिरूपमित्यर्थः सर्वेन्द्रियाणि स्वगुणैरनक्ति रंजयतीति वा ४४ स्निग्धः प्रावृषि यो घनस्तद्वत् श्यामं सर्वेषां सौन्दर्याणां संग्रहो यस्मिन् चारव आयताश्चत्वारो बाहवो यस्मिन् सुजातं यथोजितं सुगंधः प्राशस्त्यं ...



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्रीत्या प्रहसिताविवापांगौ यस्मिन् ४७ स्फुरंति किरीटादीनि यस्मिन् शंखादिमत् उत्तमर्द्धिर्लक्ष्मीः यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्तितत् ४८ सौभगयुक्ता ग्रीवा येन सिंहस्य स्कंधे परितः प्रसरंतः केसरा एव त्विषः तादृशीः सर्वतस्त्विषो बिभ्राणः सौभगग्रीवः कौस्तुभो यस्मिन् यद्वा सिंहस्येव यौ स्कंधौ तयोस्त्विषः कुंडलहारादिदीप्तीः बिभ्रदिति पृथग्विशेषणं सौभगयुक्ताग्रीवा येन स कौस्तुभो यस्मिन् श्रिया हेतुभूतयाक्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखांकितो निकषणपाषाणो येनता

प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम् लसत्पंकजकिंजल्कदुकूलं मृष्टकुंडलम् ४७ स्फुरत्किरीटवलयहारनूपुरमेखलम् शंखचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ४८ सिंहस्कंधत्विषो बिभ्रत्सौभगग्रीवकौस्तुभम् श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ४९ पूररेचकसंविग्नवलिवल्गुदलोदरम् प्रतिसंक्रामयद्विश्वं नाभ्यावर्तगभीरया ५० श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् समचार्वंघ्रिजंघोरुनिम्नजानुसुदर्शनम् ५१ ॥

दृशो नोरसा उल्लसच्छोभमानम् ४९ पूरकरेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चंचला बलयस्ताभिर्वल्गु सुंदरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिन् प्रतिसंक्रामयत् यतो निर्गतं तं तेनैव द्वारेण पुनः प्रवेशयदिव ५० श्यामश्रोण्याऽधिकं रोचिष्णु यत्पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन् अंघ्री च जंघे च ऊरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिरेतैः शोभनं दर्शनं यस्य समाश्चारवोऽध्यारयो यस्मिन् निम्ने जानुनी यस्मिन् शोभनं दर्शनं



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पद्मदीपस्थानीयेन यद्वा एवंभूतेन पदोपलक्षितं रूपं परं शरणं प्रदर्शयेत्यर्थः शरदियत्सद्मं तस्य पलाशं तद्वच्छोभिर्यस्य तेन नखदीप्तिभिरंतर्भवं अघमज्ञानं विधुन्वता स्वीयं रूपं पदं शरणं प्रदर्शय अपास्तं प्रल्हादादीनां साध्वसं येन तत् हे गुरो यतस्त्वमेव तमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ५२ अतिदुर्लभमिदं मया प्रार्थितमिति स्तौति वाह एतद्रूप मनुध्येयं ध्यानार्हं सेव न तु प्रत्यक्षतः प्राप्यमित्यर्थः ५३ तर्हि किं केनापि न प्राप्यते तत्राह भवानिति दुर्लभत्वमेवाह स्वा

**पद्मशरत्सद्मपलाशशोभिना नखद्युभिर्नोऽन्तरघं विधुन्वता प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ५२ एतद्रूपमनुध्येयमात्मशक्तिमभीप्सितम् यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ५३ भवान्शक्तिमतालभ्यो दुर्लभः सर्वदेहिनाम् स्वाराज्यस्याप्यभिमत एकांतेनात्मविद्गतिः ५४ तं दुराराध्यमाराध्य सतामपि दुरापया एकांतभक्त्या को वांछेत्पादमूलं विना बहिः ५५ यत्र निर्विष्टमरणं कृतांतो नाभिमन्यते विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा ५६ ॥**

राज्यं यस्याप्यभिमतः स्पृहणीयः किंच एकांतेन य आत्मवित् तस्यापि गतिर्गम्यः ५४ अतस्त्वद्व्यतिरेकेण न किंचित् वांछामीत्याह तं त्वामेकांतभक्त्या आराध्य बहिः स्वर्गादिसुखम् ५५ तत्र हेतुः यत्र पादमूले शरणं प्रविष्टं कृतांतः कालो ममायं वध्य इत्यभिमानं करोति किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२४
भा० च०
टी०
६७

त्संसारमूलेप्रविष्टस्यकृतांतभयाभावः किंयानयं लाभः यतस्त्वद्भक्तसंगएवसकलपुरुषार्थश्रेणिशिरसिनरीनर्त्तीत्याह भगवतस्तवसंगिनांसंगस्यक्षणार्द्धेनापिनस्वर्गंतुलयेसमन्तगणयामिनचापुनर्भवंमोक्षं मर्त्यानामा॰शिषोराज्याद्याः किमुत ५७ अथातोहेतोः अनघौअघहरावंघ्रीयस्यतवकीर्त्तिर्यशः तीर्थंगंगातयोःक्रमेणअंतर्बहिःस्नानाभ्यांविधूतःपाप्मायेषाम् अतएवभूतेष्वनुक्रोशःकृपासुसत्त्वंचरागादिरहितंचित्तम्शीलंचार्जवा

क्षणार्द्धेनापितुलयेनस्वर्गन्नाऽपुनर्भवम् भगवत्संगिसंगस्यमर्त्यानांकिमुताशि॰
षः ५७ अथाऽनघांघ्रेस्तवकीर्त्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनाम् भूतेष्व॰
नुक्रोशसुसत्त्वशीलिनांस्यात्संगमोनुग्रहएषनस्तव ५८ नयस्यचित्तंबहिरर्थवि॰
भ्रमंतमोगुहायांचविशुद्धमाविशत् यद्भक्तियोगानुगृहीतमंजसामुनिर्विचष्टेननु॰
तत्रतेगतिम् ५९ यत्रेदंव्यज्यतेविश्वंविश्वस्मिन्नवभातियत् तत्त्वंब्रह्मपरंज्योति॰
राकाशमिवविस्तृतम् ६० योमाययेदंपुरुरूपयाऽसृजत्बिभर्त्तिभूयःक्षपयत्यवि॰

दिविद्यन्तेयेषांतेषांसंगमोऽस्माकंस्यात् एषएवनस्त्वदनुग्रहः ५८ तत्त्वज्ञानंचत्वद्भक्तसंगा ॥क्रियाः ६१॥
देवभवतीत्याह नयस्येति येषांसतांभक्तियोगेनअनुगृहीतंशुद्धंसत्यस्यचित्तंवात्यार्थविक्षिप्तंनभवतितमोरूपायांगुहायांचविशत्लयंनप्रापतत्रतदासमुनिस्त्वगतिंतत्त्वंनपश्यति ५९ कीदृशंतत्त्वंतत्राह यत्रेति ६०

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्वेनापि तदेव लक्ष्ययन्नाह इदं विश्वं सदिव परमार्थमिवासृजत् कथंभूतया यया भेदबुद्धिरन्येषां भवति तया आत्मनि व
यिद्रुःस्थया स्वकार्य ———— कर्तुमसमर्थया तं त्वां निरस्तभेदं प्रतीमहि जानीमः ॥१॥ यद्यपि त्वमेवं निर्भेदं ब्रह्म तथापि प्रा
गुक्तसाकारं तव रूपं ये इदं यजंति त एव वेदागमतत्त्वज्ञा इत्याह क्रियाकलापैर्येकर्मयोगिनः पूजयंति त एव कोविदाः।
न त्वेतदनादृत्य केवलज्ञाने प्रवृत्ताः तंत्रे आगमे कथंभूतमिदं भूतेंद्रियांतःकरणैरस्वतंत्रैर्यदुपलक्ष्यते नियंतृरूपं तत् ॥२॥

यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतंत्रं भगवन्प्रतीमहि ॥१॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजंति सिद्धये भूतेंद्रियांतःकरणोपलक्षितं वेदे च तंत्रे च त एव कोविदाः ॥२॥ त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते। महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥३॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन॥

ननु भिन्ने मयि भेदं कुर्वन्तः संतः कथं ते कोविदाः नहि तैर्भेदः क्रियते त्वय्येव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह त्वमिति आद्यस्त्वमेक एव सुप्ता मायाख्या शक्तिर्यस्य पश्चा त्तया शक्त्या रजःसत्त्वतमसां द्वन्द्वैक्यं तयोरज आदेः महानहंकारः खं च मरुदग्निर्वार्धराश्च वाः उदकं सुराश्च ऋषयश्च भूतगणाश्च एवमिदं जगद्यतो भवति तद्धि भिद्यत इत्यन्वयः ॥३॥ एतदुपपादयति सृष्टमिति जरायुजांडजस्वेदजोद्भिज्जरूपे ण चतुर्विधं स्वांशेन प्रविष्टः अथो इति हेतोः पुरस्यांतः संतमंशं चिदाभासं पुरीशयनात् पुरुषं विदुः तर्हि किमीश्वरमेव संसारिणं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

विदुःनेत्याह सरघा मधुमक्षिकास्ताभिः सृष्टं मध्विव क्षुल्लकं विषयसुखं अविद्यावृतः सन् यो भुंक्ते तं जीवं विदुः तथा च श्रुतिः तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीतिति निर्णीतं च गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्यत्र ६४। तव तु सर्वनियंतः कुतः संसारइत्याह यः स्वशक्त्या इदं सृष्टवान् स एष त्वं खलु भूतैरेव भूतानि मेघपंक्तीर्वायुरिव कालयन् विचालयन् लोकान् विचकर्षसि संहरसि अनुमेयतत्त्वः अलक्ष्यस्वरूपः ६५ विकर्षणप्रकारमाह प्रमत्तइति

**अथो विदुस्त्वां पुरुषं संतमंशं भुंक्ते हृषीकैर्मधुसारघं यः ६४ स एष लोकानतिचंड॥ वेगो विकर्षसि त्वं खलु कालयानः भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवा॥ विषह्यः ६५ प्रमत्तमुच्चैरितिकृत्यचिंतया प्रवृद्धलोभं विषयेषु लालसम् त्वमप्रम त्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमंतकः ६६ कस्त्वत्पदाब्जं विजहाति पंडितो यस्तेऽवमानव्ययमानकेतनः विशंकयाऽस्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनु॥ वश्चतुर्दश ६७ ॥६७**

इतिकृत्यं एवमेवमिदं कर्त्तव्यमिति चिंतयोच्चैः प्रमत्तं तत्र हेतुः विषयेषु लालसं॥ अतिकामुकं प्राप्तेऽपि विषये प्रवृद्धलोभं अंतकस्त्वमभिपद्यसे आक्रमसि क्षुधा लेलिहानः जिह्वयोष्ठप्रांतौ स्पृशन्॥ सर्पो मूषकमिव ६६ अतः कस्त्वत्पादाब्जं त्यजेत् पंडितश्चेत् कथंभूतः यस्तवाऽवमानोऽनादरस्तेन व्ययमानं केतनं शरीरं यस्य सः यद्यस्मात् कं गुरुर्ब्रह्माऽर्चति स्मेति सर्वेषां स्तोतॄणां वा कथं च विशंकया नाशशंकया चिनोपपत्तिमितिदृढविश्वा

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

उपसंहरति अथेति रुद्रभयेनध्वस्तंअतोनकुतश्चिद्भयंयस्यांतादृशीगतिरसि ६८।६९।७०योगादेशंनामैतत्स्तोत्रमु

अथत्वमसिनोब्रह्मन्परमात्मन्विपश्चिताम् विश्वंरुद्रभयध्वस्तमकुतश्चिद्भया।
गतिः६८इदंजपतभद्रंवोविशुद्धानृपनंदनाः स्वधर्ममनुतिष्ठंतोभगवत्यर्पिताशयाः
६९ तमेवात्मानमात्मस्थंसर्वभूतेष्ववस्थितम् पूजयध्वंगृणंतश्चध्यायंतश्चासकृद्ध
रिम् ७०योगादेशमुपासाद्यधारयंतोमुनिव्रताःसमाहितधियःसर्वएतदभ्यसतादृ
ताः ७१इदमाहपुराऽस्माकंभगवान्विश्वसृक्पतिः भृग्वादीनामात्मजानांसिसृ
क्षुःसंसिसृक्षताम् ७२ तेवयंनोदिताःसर्वेप्रजासर्गेप्रजेश्वराः अनेनध्वस्ततम
सःसिसृक्ष्मोविविधाःप्रजाः ७३ अथेदंनित्यदायुक्तोजपन्नवहितःपुमान् अचिरा।
च्छ्रेयआप्नोतिवासुदेवपरायणः ७४ श्रेयसामिहसर्वेषांज्ञानंनिःश्रेयसंपरम् सु
खंतरतिदुष्पारंज्ञाननौर्व्यसनार्णवम् ७५ यइमंश्रद्धयायुक्तोमद्गीतंभगवत्स्तवम्।
अधीयानोदुराराध्यंहरिमाराधयत्यसौ ७६॥ पासाद्यपाठतःप्राप्यमनसाधारयंतोअभ्यासेनजपत

७१ विश्वसृजांपतिर्ब्रह्मा ७२ सिसृक्ष्मःसृष्टवंतः ७३ युक्तःएकाग्रचित्तः ७४ ज्ञानमेवनौर्यस्य ७५ योधीयानोभवति ७६

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

असावमुष्माद्धरेः असत्वरन् स्थिरः सन् मद्गीतं स्तोत्रं तेन गीतात् स्तुतात् एक एव वल्लभः प्रिय आश्रयस्तस्मात् ७७ कल्प उषसि ७८ तपश्चरन् तपसे तेनेप्सितं प्राप्स्यथ ७९ ॥ इति चतुर्थे टीकायां चतुर्विंशः २४ प्रचेतसः स्तुतपसस्तपनास्मि

विंदते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरन् मद्गीतगीतात्सुप्रीताच्छ्रेयसामेक। वल्लभात् ७७ इदं यः कल्प उत्थाय प्रांजलिः श्रद्धयान्वितः शृणुयाच्छ्रावयेन्मर्त्यो मु। च्यते कर्मबंधनैः ७८ गीतं मयेदं नरदेवनंदनाः परस्य पुंसः परमात्मनस्तवम् जपं। त एकाग्रधियस्तपो महच्चरध्वमंते तत आप्स्यथेप्सितम् ७९ ॥ इति श्रीभागवते म हापुराणे चतुर्थस्कंधे रुद्रगीतं नाम चतुर्विंशोऽध्यायः २४ मैत्रेय उवाच इति संदिश्य भगवान्बार्हिषदैरभिपूजितः पश्यतां राजपुत्राणां तत्रैवांतर्दधे हरः १ रुद्रगीतं भग वतः स्तोत्रं सर्वे प्रचेतसः जपंतस्ते तपस्तेपुर्वर्षाणामयुतं जले २ प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्तमानसम् नारदोऽध्यात्मतत्वज्ञः कृपालुः प्रत्यबोधयत् ३ ॥ ॐ त्रेनारदो घृणा

प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पंचभिः १ पुरंजनकथाव्याजात्पंचविंशे तु नारदः आत्मनो बुद्धिसंगेन विविधा माह संसृतिम् २ प्रचेतःसु तपस्तीव्रं तप्यमानेषु नारदः पुरंजनकथाकूटं प्राह प्राचीनबर्हिषे ३ । १ । २ प्रचेतस्सु तप



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्राचीनबर्हिषं बोधितवान् अतः प्रचेतसां कथामसमाप्यैव तत्पितुर्वृत्तमाह प्राचीनबर्हिषमपि ३ ॥ छ ॥ श्रेयःफलं ईहसे इच्छसि इह कर्मणि तदुभयं नेष्यते विचारकैः ४ परं श्रेयो मोक्षं कर्मभिरपविद्धा विक्षिप्ता धीर्यस्य ५ किंच गृहेषु स्थितः पुत्रादिष्वेव पुरुषार्थधीर्यस्य ६ कर्मफलेषु वैराग्यमुत्पाद्य ब्रह्मविद्यामुपदेष्टुं योगानुभावेन यज्ञपशून् प्रत्यक्षं प्र

श्रेयस्त्वं कतमद्राजन्कर्मणात्मन ईहसे दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ४ राजोवाच न जानामि महाभाग परं कर्मापविद्धधीः ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ५ गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः न परं विंदते मूढो भ्राम्यन्संसारवर्त्मसु ६ श्रीनारद उवाच भो भोः प्रजापते राजन्पशून्पश्य त्वयाध्वरे संज्ञापितान्जीवसंघान्निर्घृणेन सहस्रशः ७ एते त्वां संप्रतीक्षंते स्मरंतो वैशसं तव संपरेतमयःकूटैश्छिंदंत्युत्थितमन्यवः ८ अत्र ते कथयिष्येऽमुमितिहासं पुरातनम् पुरंजनस्य चरितं निबोध गदतो मम ९ आसीत्पुरंजनो नाम राजा राजन्बृहच्छ्रवाः ॥ १ ॥ छ ॥

दर्शयति भो भो इति संज्ञापितान् मारितान् ७ एते त्वां संपरेतं मृतं संप्रतीक्षंते वैशसं त्वत्कृतां पीडां स्मरंतः ततश्चायःकूटैर्लोहयंत्रमयैः शृंगैः छिंदंति छेत्स्यंति ८ अत्र अस्मिन्संकटे निस्तारकममुमितिहासं कथयिष्यामि ९ तत्र जीवस्य विषयासक्त्या संसारः सर्वेश्वरानुग्रहेण निवर्त्तत इति वक्तुं विपर्ययगृहीतस्य साक्षाद्बोधयितुमशक्ते राजवृत्तांतमिवाह आ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२५
भा० च०
टी०
९६

पुरंजनादीन्स्वयमेवातःपंचमेऽध्यायेव्याख्यास्यतितथाऽपिस्फुरणग्रहणाययथोपयोगंकिंचित्व्याख्यास्यामःतत्रस्व
कर्मभिःपुरंजनयतीतिपुरंजनोजीवः नविज्ञातंनामयस्यनचविज्ञातंचेष्टितंयस्यईश्वरस्तस्यसखा यद्वा विज्ञातंचेष्टि
तंजीवप्रेरणादिलक्षणंयस्यजीवपारतन्त्र्यस्यानुभवसिद्धत्वात् १० शरणंभोगायतनंदेहम् ११ यावतःपुरस्ताःतस्यतस्य
कामस्योपपत्तयेप्राप्त्यैअसौसाधुनमेनेगवादिदेहानामैहिकपारलौकिकभोगभोग्यलाभावात् तथाचश्रुतिःताभ्यो
गामानयत्ताअब्रुवन्नवैनोऽयमलमितिताभ्योऽश्वमानयत्ताअब्रुवन्नवैनोऽयमलमितीति १२ हिमवतोदक्षिणेषु

तस्याविज्ञातनामासीत्सखाऽविज्ञातचेष्टितः १० सोऽन्वेषमाणःशरणंबभ्रामपृ
थिवींप्रभुः नानुरूपंयदाऽविंदद्भूत्सविमनाइव ११ नसाधुमेनेताःसर्वाभूतलेः
यावतीःपुरः कामान्कामयमानोऽसौतस्यतस्योपपत्तये १२ सएकदाहिमवतोदक्षि
णेष्वथसानुषु ददर्शनवभिर्द्वार्भिःपुरंलक्षितलक्षणाम् १३ प्राकारोपवनाट्टालप
रिखैरक्षतोरणैः ॥ स्वर्णरौप्यायसैःशृङ्गैःसंकुलांसर्वतोगृहैः १४ ॥

सानुषुकर्मक्षेत्रेभारत
वर्षेपुरंमनुष्यशरीरेलक्षितानिदृष्टानिसर्वाणिलक्षणानियस्यांअंधपंगुत्वादिदोषरहितामित्यर्थः १३ तामनुवर्णय
तित्रिभिः अत्रकिंचित् किंचित्सादृश्यमवलंब्यकथासौंदर्यायप्राकारादीनिवर्ण्यंतेपरिखैरितिपुंस्त्वमार्षंअक्षा
णिगवाक्षाः त्वगादयःशरीरावयवाःप्राकारादिषुपुरावयवत्वेनरूप्यंतेस्वर्णादिशृंगैःशिखरैर्युक्तायेगृहास्तैःसंकु
लामिति आधारादिचक्राणिगृहाःशृंगाणिचराजसादिस्वभावाविवक्षिताः १४ ॥ १४ ॥ ९६ ॥ रामः

रामः
९६

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

नीलादिभिःकृत्स्नाहर्म्यस्थलीयस्यांअरुणंमाणिक्यंस्थलीहृदयंनाड्योनीलादिःभावेनरूप्यंतेतत्तद्विषयवासनाभ
भोगवतीनागानांपुरीमिवः १५ सभासमाजस्थानंचत्वरंचतुष्पथःरथ्याराजमार्गःआक्रीडायतनंद्यूतादिस्थानम्
आपणोहट्टः तैःचैत्यंजनानांविश्रामस्थानंध्वजेषुपताकाःताभिश्चयुक्ताम् १६ अत्रचविषयनिष्ठबुद्धियोगेनजीव
स्यदेहसंबंधइतिविवक्षयाविषयाविषयवर्गबाह्योपवनत्वेननिरूपयतितद्विशेषान्स्रक्चंदनादीन्दिव्यद्रुम

**नीलस्फटिकवैडूर्य्यमुक्तामरकतारुणैः क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमि**
**व १५ सभाचत्वररथ्याभिराक्रीडायतनापणैः चैत्यध्वजपताकाभि र्युक्तां विद्रुम**
**वेदिभिः १६ पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले नदद्विहंगालिकुलकोलाहल**
**जलाशये १७ हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना चलत्प्रवालविटपनलिनी**
**तटसंपदि १८ नानारण्यमृगव्रातैरनाबाधे मुनिव्रतैः॥**

लतादिभावेनशेषःकथाऽलंकारःबा
ह्योपवनेप्रमदांददर्शेतिचतुर्थेनान्वयः नदतांविहंगालिकुलानांकोलाहलोयेषुतेजलाशयायस्मिन् १७ हिमनि
र्झराणांविप्रुषोबिंदवः तद्वताकुसुमाकरसंबंधिनावायुनाचलंतःप्रवालाविटपाःशाखाश्चयेषांतैर्वृक्षैर्नलिनीनांस
रसीनांतटेषुसंपत्समृद्धिर्यस्मिन् १८ अनाबाधेतत्कृतबाधारहिते मुनिव्रातैरहिंस्रैः आत्मानमाकुलंमन्यतेयत्रत
त्रप्रमदोत्तमांविषयविवेकवतींबुद्धिंददर्शयदृच्छयागतामितितयोः॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

संबंधस्यदुर्निरूपत्वंदर्शयति १९ नामनुवर्णयतिसार्धैश्चतुर्भिःदशभिर्ज्ञानकर्मेन्द्रियैःएकैकंप्रत्येकंशतंअनंता वृत्तयस्तासांनायकैःपतिभिःसहपाठांतरेनायिकास्त्रियोयेषांतैः २० पंचशीर्षाणिवृत्तयोयस्यतेनअहिनाप्राणेनप्र तीहारेणपालकेनगुप्तांऋषभंभर्त्तारंअप्रौढांषोडशवार्षिकीम् २१ गंधज्ञानादिभिर्बुध्यवयवैःरूनासत्वादिरूप्यते। समौविन्यस्तौरचितौकर्णौताभ्यांकुंडलशोभांदधतीम् २२ अन्नमयंहिसौम्यमनइतियत्रूसन्तरन्नसेत्यादिश्रुत्युक्त

आहूतंमन्यतेपांथोयत्रकोकिलकूजितैः १९ यदृच्छयागतंतत्र ददर्शप्रमदोत्तमाम् भृत्यैर्दशभिरायांतीमेकैकशतनायकैः २० पंचशीर्षाहिनागुप्तांप्रतीहारेणसर्वतः अन्वेषमाणामृषभमप्रौढांकामरूपिणीम् २१ रूनासांसुदतींबालांरूकपोलांवरा ननाम् समविन्यस्तकर्णाभ्यांबिभ्रतीकुंडलश्रियम् २२ पिशंगनीवीरूश्रोणीश्यामां कनकमेखलाम् पद्भ्यांक्वणद्भ्यांचलतीनूपुरैर्देवतामिव २३ स्तनौव्यंजितकैशोरौ समवृत्तौनिरंतरौ वस्त्रांतेननिगूहंतीव्रीडयागजगामिनीम् २४ तामाहललितांवी क्ष्य रैः सव्रीडस्मितशोभनां

सारेणश्यामामित्युक्तम् नूपुरैःक्वणद्भ्यांनूपुरेणपादांगुलीयकानामप्युपल क्षणादूडुवचनम् २३ व्यंजितंकैशोरंयौवनोपक्रमोयाभ्यांसमौच वृत्तौच २४ तामाहेतितयोःसंवादोक्तिःसं बंधदार्ढ्यार्थयअपांगएवपुंखोमूलप्रांतोयस्यकटाक्षस्यबाणस्यतेनस्पष्टेविद्धः॥ ९ ॥ ९ ॥ ९॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्रेम्णा उच्चैर्भ्रमंती भ्रूः धनुस्थानीया यस्मिन् तेन २५ कुतः स्थानादिहागतासि इहे सति पुर्याः समीपस्था उपपुरी ता मालक्ष्य किं कर्त्तुमिच्छसीत्यर्थः २६ नेतव्यं अनुपथाः अनुवर्त्तिनः एते के एकादशो महाभटो बृहल्लक्ष्यमाणो येषु दृश्यन्ते बुद्धेर्मनसः पृथगुपादानं बुद्धिपरिचारकेंद्रियसहायतया तत्परिचारकत्वविवक्षया २७ त्वं ह्रीः किं पतिं धर्मं विचिन्वती अथवा भवानीपतिं शिवं विचिन्वती अथवा किं वाक् सरस्वती पतिं ब्रह्माणं रमा

स्निग्धेनापांगपुंखेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा २५ का त्वं कंजपलाशाक्षी कस्यासीह कुतः सति इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे २६ क एतेऽनुपथा ये त एकादश महाभटाः एता वा ललनाः सुभ्रु कोऽयं तेऽहिः पुरःसरः २७ त्वं ह्रीर्भवान्यस्यथ वाक् रमा पतिं विचिन्वती किं मुनिवद्रहो मुने त्वदंघ्रिकामाप्तसमस्तकाम क्व पद्मकोशः पतितः कराग्रात् २८ नासां वरोर्वन्यतमा भुविस्पृक् पुरीमिमां वीरवरेण साकम् अर्हस्यलं कर्त्तुमदभ्रकर्मणा लोकं परं श्रीरिव यज्ञपुंसा २९॥

पतिं विष्णुं मुनिरिव संयवासती कथंभूतं पतिं त्वदंघ्रिकामेनैव त्वत्कृपया त्वदंघ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तं २८ हे वरोरु आसां मध्ये त्वमन्यतमापि न संभवसि यतो भुविस्पृक् न हि देवता भुवं स्पृशंति वीरवरेण मया ननु त्वमकर्मा कथं त्वया सहालंकारोमीति चेत्तत्राह अदभ्रमनल्पं कर्मत्वत्संगादस्य ममतेन स्वतः अकर्मत्वेन त्वत्संगात्सकर्मा भवामीत्यर्थः परं वैकुंठम् २९॥ २९ ॥ २९ ॥

यत् यस्मात् तवापांगेन विखंडितंइंद्रियंमनोयस्यतंमांमनोभवोबाधतेअथतस्मात्त्वंअनुगृहाणसव्रीडंयद्भावेनप्रेम्णास्मि
तंतेनविभ्रमंतीयाभ्रूस्तयाउपस्पृष्टःप्रेरितः ३० यत्व्रीडयासंमुखंनभवतितदाननमुन्नीयमेदर्शयशोभनेभ्रुवौयस्मि
न्स्फुतारेशोभनेभ्रुवौयस्मिन्स्फुतारेशोभनकनीनिकेलोचनेयस्मिन्व्यालंबिनोदीर्घायेनीलाअलकास्तेषांवृंदेनसंवृ॰

यदेषतेऽपांगविखंडितेंद्रियंसव्रीडभावस्मितविभ्रमद्भ्रुवा त्वयोपसृष्टोभगवान्म
नोभवःप्रबाधतेऽथानुगृहाणशोभने ३० तदाननंसुभ्रुसुतारलोचनंव्यालंबिनीलाल
कवृन्दसंवृतम् उन्नीयमेदर्शयवल्गुवाचकंयद्व्रीडयानाभिमुखंशुचिस्मिते ३१ नार॰
दउवाच इत्थंपुरंजनंनारीयाचमानमधीरवत् अभ्यनंदततंवीरहसंतीवीरमोहि॰
ता ३२ नविदामवयंसम्यक्कर्त्तारंपुरुषर्षभ आत्मनश्चपरस्यापिगोत्रंनामचयत्कृ
तम् ३३ इहाद्यसंतमात्मानंनिविदामततःपरम् येनेयंनिर्मितावीरपुरीशरणमात्मनः
एतेसखायःसख्योमेनरनार्य्यश्चमानद॥ तंवल्गूनिवाचकानिवाक्यानियस्मिन् ३१ हेवीरस्माऽ
पितंदृष्ट्वामोहितासतीतमाह ३२ यस्त्वंकस्यासीत्यनेनकस्यपुत्रीगोत्रजावेतिकात्वमितिचकिंनामाऽसीतितत्राह
आत्मनोममपरस्यतवापिकर्त्तारंसम्यक्नविद्मःगोत्रंनामचयत्कृतंभवतितंचनविद्मः ३३ आत्मनोममशरणमि
यंपुरीयेननिर्मितातंचनविद्मः ३४ यस्त्वंकएतेअनुपश्चाद्इतितत्राह॥ ७॥ २॥ ३॥ २॥

रामः
९८
@
CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एतदिति ३५ आस्तांनामगोत्रादि यदत्रागतोऽसिएतद्दिष्ट्याभद्रंतावत् ग्राम्यान् इंद्रियग्रामार्हान् उद्वहिष्यामिसंपादयि-
ष्यामिस्वबंधुभिःसखीभिश्च ३६ समाःसंवत्सरान् मनुष्यदेहप्रवेशाच्छतमुक्तं ३७ प्रवृत्तिस्वभावत्वान्निवृत्तिनिंदा-
पूर्वकंतत्संगमभिनंदतिपंचभिः त्वत्तोऽन्यंकंनुरमये अरतिज्ञंनैष्ठिकंअकोविदंअनिषिद्धसुखत्यागिनंसंपरायोमृ-

सुप्तायांमयिजागर्त्तिनागोऽयंपालयन्पुरीम् ३५ दिष्ट्यागतोऽसिभद्रंतेग्राम्यान्का-
मानभीप्ससे उद्वहिष्यामितांस्तेऽहंस्वबंधुभिररिंदम ३६ इमांत्वमधितिष्ठस्वपुरींनव-
मुखींविभो मयोपनीतान्गृह्णानःकामभोगान्शतंसमाः ३७ कंनुत्वदन्यंरमयेह्यरति-
ज्ञमकोविदम् असंपरायाभिमुखमश्वस्तनविदंपशुम् ३८ धर्मोह्यत्रार्थकामौचप्र-
जानंदोऽमृतंयशः लोकाविशोकाविरजायान्नकेवलिनोविदुः ३९ पितृदेवर्षिमर्त्यानां
भूतानामात्मनश्चह क्षेमंवदंतिशरणंभवेऽस्मिन्यद्गृहाश्रमः ४० कानामवीरविख्या-
तंवदान्यंप्रियदर्शनम् नवृणीतप्रियंप्राप्तंमादृशीत्वादृशंपतिम् ४१ ॥

त्युस्तदनभिमुखंपर-
लोकचिंताशून्यंअश्वस्तनविदंश्वइदंकर्त्तव्यमितीहलोकचिंताशून्यंपशुतुल्यम् ३८ अत्रगार्हस्थ्यत्रजानन्दःपु-
त्रसुखंअमृतंमोक्षःकेवलिनोयतयः ३९ गृहाश्रमइतियत् एतत्क्षेमार्हंशरणमाश्रयंवदंति ४०।४१ भोगिभोगयोःसर्प-
देहाकारयोस्तवभुजयोर्य्यन्नसज्जेत् एवंभूतंकस्याःस्त्रियामनःस्यात्नकस्याअपियोभवानऽनाथवर्गः॥ छ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

दीनस्तेषामाधीअलमत्यर्थअपोहितुंसर्वत्रचरतिकेनापोहितुंघृणयोद्धतःअतिशयितोयःस्मितपूर्वकोऽवलो
कस्तेन ४२ समुद्यसमुद्दीर्घसमाःसंवत्सरान् ४३ तत्रजाग्रदवस्थांसंक्षेपेणाह उपगीयमानइतिस्वप्नावस्थामाह।
इदंनीत्वरयाकाशंसापस्थानंश्रुचौनिदाघे ५४ इदानींनवद्वारदर्शनपूर्वकंजाग्रदवस्थांप्रपंचयतिसप्तेतियावद्।

कस्यामनस्तेभुविभोगिभोगयोःस्त्रियानसज्जेद्भुजयोर्महाभुज योऽनाथवर्गाधि
मलंघृणोद्धतस्मितावलोकेनचरत्यपोहितुम् ४२ श्रीनारदउवाच इतितौदंपतीतत्र
समुद्यसमयंमिथः तांप्रविश्यपुरींराजन्सुमुदातेशतंसमाः ४३ उपगीयमानोललि
तंतत्रतत्रचगायकैः क्रीडन्परिवृतःस्त्रीभिर्ह्रदिनीमाविशच्छुचौ ४४ सप्तोपरिकृता
द्वारःपुरस्तस्यास्तुद्वेअधः पृथग्विषयगत्यर्थंतस्यांयःकश्चनेश्वरः ४५ पंचद्वारस्तुपौ
रस्त्यादक्षिणैकातथोत्तरा पश्चिमेद्वेअमूषांतेनामानिनृपवर्णये ४६ खद्योताविर्मुखी
चप्राग्द्वारावेकत्रनिर्मिते॥

४१ ध्यायसमाप्तितस्याःपुरउपरिकृताःद्वारःसप्तअपावृताइतिपाठेसंवृताः
नेत्रेनासिकेश्रोत्रेमुखंचेतिसप्तअधोद्वेद्वारौगुदलिंगेयःकश्चनेति आत्मनःसम्यग्विज्ञानादनियतत्वाच्च ४५॥
तासुसप्तसुपंचद्वारःपौरस्त्याःपूर्वदिग्भवाः ४६ खद्योतवदल्पप्रकाशावामनेत्ररूपाआविःप्रकटंमुखंयस्याःसाव
हुप्रकाशादक्षिणनेत्रलक्षणातस्याद्दक्षिणाद्गम् आत्मनोवीर्यवत्तरइतिश्रुतेःस्वानुभवाच्च॥ छ॥ ९॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्वानुभवाच्चतत्रप्रकाशाधिक्यंएकत्रसंलग्नेविभ्राजितंरूपंद्युमत्सख:चक्षुःसहितः४७ नलनालशब्दौछिद्रवाचनौतद्वतीनलिनीनालिनीचवामदक्षिणनासिकेअत्रापिसंज्ञाभेदाद्देवकार्येन्यूनाधिक्यंपूर्ववत्ज्ञेयं अवधूतोवाय्वधिष्ठितोघ्राणःसौरभंगंधम् ४८ मुख्याप्रधानाआस्यंआपणोभाषणंबहूदनश्चित्रमन्नंवह्वोदनइत्यनुक्तिः परोऽस्वादस्तायरसज्ञंरसनेंद्रियंविपणोवागिंद्रियंताभ्यामन्वितः ४९ दक्षिणेनेतिचनतृतीयाकिंतुदक्षिणस्यांदिशीत्यस्मिन्नर्थेतद्धितोऽयमेनप्प्रत्ययोव्ययसंज्ञःएवमुत्तरेणेतिअयमर्थःपंचानांविषयाणांअन्यतोऽनवगता

विभ्राजितंजनपदंयातिताभ्यांद्युमत्सखः ४७ नलिनीनालिनीचप्राक्द्वारावेकत्रनिर्मिते अवधूतसखस्ताभ्यांविषयंयातिसौरभम् ४८ मुख्यानामपुरस्ताद्वास्तायापणबहूदनौ विषयौयातिपुरराड्रसज्ञविपणान्वितः ४९ पितृहूर्नृपपुर्याद्वार्दक्षिणेनपुरंजनः राष्ट्रंदक्षिणपंचालंयातिश्रुतिधरान्वितः ५० देवहूर्नामपुर्याद्वाउत्तरेण (पुरञ्जनः ॥ २॥

नांप्रकाशनायालमितिपंचालंशास्त्रंश्रवणकालेचबलाधिक्याद्दक्षिणकर्णःप्रथमंप्रवर्त्ततेशास्त्रेचप्रथमंश्रोतव्यंकर्मकांडमित्येतावतासाम्येनप्रवृत्तसंज्ञस्यकर्मकांडस्यदक्षिणकर्णेनश्रवणमिष्यतेतस्तदर्थमनुष्ठायपितृभिराहूतःपितृलोकप्रापकंपितृयानंप्रपद्यतेतदनेनप्रकारेणापिपितृणामाह्वानमनेनभवतीतिपितृहूर्दक्षिणकर्णःएवंतद्वैपरीत्येनोत्तरःकर्णोदेवहूःतथाचव्याख्यास्यतिपितृहूर्दक्षिणःकर्णः उत्तरोदेवहूःस्मृतः प्रवृत्तंचनिवृत्तंचशास्त्रं पंचालसंज्ञितम् ॥

पितृयानंदेवयानंश्रोत्राच्छ्रुतिधराद्व्रजेदिति ५०। ५१ आसुराइंद्रियाराभास्तेषामियमासुरीशिश्नंद्वाःग्रामकंग्रामस्थज नानांकंसुखंव्यवायंदुर्मदेनगुह्येन्द्रियेण ५२ निर्ऋतिर्नामगुदःमृत्युद्वारत्वात्वैशसंमलविसर्गेलुब्धकेनपायुनातेनोत्क्रांतस्यदुःखप्राप्तेःलुब्धकसाम्यम् ५३ अमीषांमध्येनिर्वाक्पादःपेशस्कृत्हस्तःतावुभावंधौछिद्राभावात्स्वतोज्ञानः

राष्ट्रमुत्तरपंचालंयातिश्रुतिधरान्वितः ५१ आसुरीनामपश्चाद्द्वास्तयायातिपुरञ्जनः ग्रामकन्नामविषयंदुर्मदेनसमन्वितः ५२ निर्ऋतिर्नामपश्चाद्द्वास्तयायातिपुरंजनः। वैशसंनामविषयंलुब्धकेनसमन्वितः ५३ अंधावमीषांपौराणांनिर्वाक्पेशस्कृतावुभौ। अक्षण्वतामधिपतिस्ताभ्यांयातिकरोतिच ५४ सयर्ह्यन्तःपुरगतोविषूचीनसमन्वितः मोहंप्रसादंहर्षञ्चयातिजायात्मजोद्भवम् ५५ एवंकर्मसुसंयुक्तःकामात्मावंचितोबुधः महिषीयद्यदीहेततत्तदेवान्ववर्त्तत ५६ क्वचित्पिबंत्यांपिवतिमदिरांमदविह्वलः अश्नंत्यांक्वचिदश्नातिजक्षत्यांसहजक्षति ५७ क्वचिद्गायतिगायंत्यांरुदत्यांरुदतिक्वचित्॥ ५८

क्रियाशक्त्यभावाच्चअक्षण्वतांइंद्रियवतांदेहानामधिपतिःपुरंजनःत्वगिंद्रियस्यानुक्तिःसर्वेष्वंतर्भावात् ५४ अंतःपुरंहृदयंगतःविषूचीनंसर्वतोमुखंमनःमोहप्रसादहर्षास्तमःसत्वरजःकार्याणिजायाबुद्धिःआत्मजाःइंद्रियपरिणामास्तदुद्भवम् ५५ जक्षत्यांभक्षयन्त्याम् ५६। ५७॥ ५७॥ ६॥ ६॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

।५८ आसतीआसीनाम् ५९। ६०। ६१ सर्वा असंगत्वादिलक्षणाप्रकृतिः स्वभावो वंचितो यस्य सर्वथाप्रकृत्या वंचितइ
तिवा नेच्छन् अनिच्छन् लैव्यात् पारवश्यात् ६२ इति श्रीचतुर्थेटीकायां पंचविंशः २५॥ षड्विंशे मृगयाव्याजात्स्वप्नजागर
णोक्तितः तद्बुद्धित्यागयोगाभ्यां संसृतिः साप्रपंच्यते १ तदेवमात्मन उपाधिकृतां सुषुप्त्यवस्थां जाग्रदवस्थां चोक्त्वा इदानीं

क्वचिद्धसंत्यां हसति जल्पंत्यामनुजल्पति ५८ क्वचिद्धावति धावंत्यां तिष्ठंत्यामनुतिष्ठ
ति अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ५९ क्वचिच्छृणोति शृण्वंत्यां पश्यंत्या
मनुपश्यति क्वचित् जिघ्रति जिघ्रंत्यां स्पृशंत्यां स्पृशति क्वचित् ६० क्वचिच्च शोचतीं जा
यामनुशोचति दीनवत् अनुहृष्यति हृष्यंत्यां मुदितामनुमोदते ६१ विप्रलब्धो महिष्यै
वं सर्वप्रकृतिवंचितः नेच्छन्ननुकरोत्यज्ञः लैव्यात्क्रीडामृगो यथा ६२॥ इति श्रीभा
गवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्यानं पंचविंशोध्यायः २५॥ श्रीनारद उवाच॥
स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम्॥ ॐ स्वप्नावस्थामाह स एकदेति दशभिः महानिष्वासो ध
नुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य स रथमारुह्य पंचप्रस्थं वनमगादिति तृतीयेनान्वयः रथं तदानीमेवविधं तं
स्वप्नदेहं जाग्रद्देहस्य शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात् पंचज्ञानेंद्रियाण्यश्वा यस्य आशुगं शीघ्रगतिं द्वे अहंताम
मते ईषे दंडिके यस्य द्वे पुण्यपापे चक्रे यस्य एकं प्रधानमक्षो यस्य॥ छी॥ श्री॥ ६॥ शमः

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

त्रयोगुणावेणवोध्वजायस्यपंचप्राणाबंधुराणिबंधनानियस्य १ एकंमनोरश्मिःप्रग्रहोयस्यएकाबुद्धिःदमनःसूतोयस्य तंचतंचएकंहृदयंनीडंरथिनउपवेशस्थानंयस्मिन्द्वौशोकमोहौकूबरौयुगबंधनस्थानंयस्यपंचशब्दादयोविषयाः प्रह्रियंतेप्रक्षिप्यंतेयस्मिन्अस्यव्याख्यानंभविष्यतिपंचेंद्रियार्थप्रक्षेपइतिसप्तधातवोवरूथारक्षार्थंचर्माद्यावरणानियस्यपंचकर्मेन्द्रियाणिविक्रमागतिप्रकारायस्य २ हैमोपस्करंसौवर्णाभरणंस्वर्णवर्मावर्मकवचंरजोगुणावृतःअक्षयेषुधिःइषुधिर्निषङ्गःअनंतवासनाऽहंकारोपाधिःएकादशोमनोरूपश्चमूनाथःसेनापतिर्यस्यवासनामयस्यम

द्वीषंद्विचक्रमेकाक्षंत्रिवेणुंपंचबंधुरम् १ एकरश्म्येकदमनमेकनीडंद्विकूबरम्पं
चप्रहरणंसप्तवरूथंपंचविक्रमम् २ हैमोपस्करमारुह्यस्वर्णवर्माऽक्षयेषुधिःए
कादशचमूनाथःपंचप्रस्थमगाद्वनम् ३ चचारमृगयांतत्रदृप्तआत्तेषुकार्मुकःवि
हायजायामतदर्हांमृगव्यसनलालसः ४ आसुरीवृत्तिमाश्रित्यघोरात्मानिरनुग्रहः॥

नसःप्रग्रहत्वंसंकल्पविकल्पात्मकस्यबुद्धिद्वत्त्वेनचवक्ष्यमाणस्यचमूनाथत्वमितिविभागःपंचशब्दादयोविषयाःप्रस्थाःसानवोयस्मिन्तद्वनंभजनीयंदेशमगात् ३ आत्तागृहीताइषवोरागादिरूपाःकार्मुकंचभोगाद्यभिनिवेशरूपंयेनजायांविवेकवतीबुद्धिंविहायअतदर्हांत्यागानर्हांत्यागेहेतुःमृग्यंतइतिमृगाविषयास्तेषुव्यसनंभोगासक्तिस्तेनलालसाअतिस्पृहायस्य ४ बाणैःरागादिभिःवनेषुभजनीयदेशेषुव[illegible]नचरान्भजनीयविषयान्व्यहनत्।
आत्मसात्कृतवान्॥ छ ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कथापक्षेतुस्पष्टमेव ५ नन्वाक्रूरींवृत्तिमाश्रित्येति किमितिमृगयानिंद्यतेकथापक्षेतावद्राज्ञोविहितैवसाअध्यात्मपक्षे पिजीवस्यविषयभोगोविहितएवइत्याशंक्याह तीर्थेष्विति त्रिभिः अयंभावः नहिमृगयाविधीयतेरागप्राप्तत्वात् किंतुनियम्यतेप्रवृत्तिःसंकोच्यते नियममेवषड्भिर्दर्शयति यद्यलमत्यर्थंलुब्धोरागीसन् हन्यात्तर्हितीर्थेषुश्राद्धादिष्वेवतत्रापिप्रतिदृष्टेषुप्रख्यातेष्वेवनतुनित्यश्राद्धादिषुतत्रापिराजैवमेध्यानेववनेएवयावदुपयोगमेवेति एवंजीवस्यविषयसेवापियावदुपयोगंनयथेष्टमितिनियमएवेत्यर्थः ६ अतोनावश्यकत्वमित्याह यइति एवंनियतंकर्मविद्वान् तेनेत्युपलक्षणंतेना

न्यहनन्निशितैर्बाणैर्वनेषुवनगोचरान् ५ तीर्थेषुप्रतिदृष्टेषुराजामेध्यान्पशून्वने॥
यावदर्थमलंलुब्धोहन्यादितिनियम्यते ६ यएवंकर्मनियतंविद्वान्कुर्वीतमानवः
कर्मणातेनराजेंद्रज्ञानेनसनलिप्यते ७ अन्यथाकर्मकुर्वाणोमानारूढोनिबध्यते गु
णप्रवाहेपतितोनष्टप्रज्ञोव्रजत्यधः ८ तत्रनिर्भिन्नगात्राणांचित्रवाजैःशिलीमुखैः
विप्लवोभूद्दुःखितानांदुःसहःकरुणात्मनाम् ९ शशान्वराहान्महिषान्गवयान्रुरुशल्लकान्॥ १०

न्येनवाकर्मणैवमनुष्ठितेनयज्ज्ञानंभवतितेनज्ञानेनहेतुनासोनुष्ठातानलिप्यते ७ अन्यथानियमोल्लंघनेनअंतःकरणशुद्ध्यभावात् कर्तृत्वाभिमानमारूढःकर्मभिरनुवध्यतेततश्चगुणप्रवाहेपतितोअधोव्रजति ८ प्रासंगिकंपरिसमाप्यपुनर्मृगयामेवानुवर्त्तयतितत्रेति चित्रवाजाःपक्षाःयेषांतैःविप्लवोनाशः करुणात्मनांकृपालूनांदुः

सहः ९॥ ९ ॥ रामः ॥

१० तदेवं स्वप्नावस्थादर्शितादिदानीं पुनरपि विवेकवत्याबुद्ध्यारममाणस्य पुत्रादिसंततिं प्रपंचयिष्यन् कथाशेषं निर्यो य
तस्याः प्रणयकुपितायाअनुनयंप्रस्तावसहितमाह ततआरभ्ययावदध्यायसमाप्तिआईयिवान् आगतः कृतंस्नान

मेध्यानन्यांश्च विविधान् विनिघ्नन् श्रममध्यगात् १० ततः क्षुत्तृट्परिश्रांतो निवृत्तो
गृहमेयिवान् कृतस्नानोचिताहारः संविवेश गतक्लमः ११ आत्मानमर्हयांचक्रे धू
पालेपस्रगादिभिः साध्वलंकृतसर्वांगो महिष्यामादधेमनः १२ तृप्तोहृष्टः सुदृप्त
श्च कंदर्पाकृष्टमानसः नव्यचष्टवरारोहांगृहिणींगृहमेधिनीम् १३ अंतःपुरस्त्रियो
ऽपृच्छद्विमनाइववेदिषत् अपिवः कुशलंरामाः सेश्वरीणांयथापुरा १४ नतथैतर्हि
रोचंतेगृहेषुगृहसंपदः यदिनस्याद्गृहेमातापत्नीवापतिदेवता व्यंगेरथइवप्राज्ञः
कोनामासीतदीनवत् १५ क्ववर्त्ततेसाललनामज्जंतंव्यसनार्णवे यामामुद्धरतेप्रज्ञां
दीपयंतीपदेपदे १६ रामाऊचुः नरनाथनजानीमस्त्वत्प्रियायद्व्यवस्यति भूतलेनिर
वस्तारेशयानांपश्यशत्रुहन् १७ ॥ उचितआहारश्चयेनसंविवेश शय्यामाश्रितः ११। १२ गृहमेधि
नींसात्विकीबुद्धिंराजस्यांबुद्ध्यांवर्त्तमानोनापश्यत् १३ वेदिषत् हेप्राचीनबर्हिः अंतःपुरस्त्रियः तत्सखीः सेश्वरीणांस्वा
मिनीसहितानांयथापुरेत्यादिपृथक्वाक्यम् १४ व्यंगेचक्रादिहीने १५ निरवस्तारेअस्तरणरहिते १६। १७ ॥ २॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अवधूतां त्यक्तदेहादरां तत्संगेनोन्मथितं व्याकुलं ज्ञानं यस्य १८ स्नेहसंरंभः प्रणयकोशः तस्य लिंगं कुटिलदृष्ट्यादि स्वस्मिन्नलब्धवान् १९ उत्संगमारोप्य लालिताम् २० कृतमागो अपराधो यैस्तेषु आत्मसात् कृत्वा अस्मादधीनोयमिति मत्वा शिक्षार्थं दण्डं न कुर्वंति ते भृत्या मंदभाग्याः २१ यतः परमोनुग्रहो दंडः यस्तु दक्षिणो विषीदति सोऽज्ञ इत्याह बाल इति

नारदउवाच पुरंजनः स्वमहिषीं निरीक्ष्यावधुतां भुवि तत्संगोन्मथितज्ञानो वैक्लव्यं परमं ययौ १८ सांत्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता प्रेयस्याः स्नेहसंरंभलिंगमात्मनि नाभ्यगात् १९ अनुनिन्येथ शनकैर्वीरोऽनुनयकोविदः पस्पर्श पादयुगलमाह चोत्संगलालिताम् २० पुरंजनउवाच नूनं त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे कृतागःस्वात्मसात्कृत्वा शिक्षादंडं न युज्यते २१ परमोनुग्रहो दंडो भृत्येषु प्रभुणार्पितः॥ बालो न वेद तत्तन्वि बंधुकृत्यममर्षणः २२ सा त्वं मुखं सुदति सुभ्र्वनुरागभारव्रीडाविलंबविलसद्धसितावलोकम् नीलालकालिभिरुपस्कृतमुन्नसन्नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम् २३॥ बंधुकृत्यं शिक्षाकरणं अमर्षणः क्रोधी २२ हे सुदति सुभ्रु हे मनस्विनि सा त्वमस्माकं स्वामिनी अतः स्वानां मुखं प्रदर्शय कीदृशं अनुरागभारेण व्रीडया यो विलंबः मंथरता तेन विलसत् हसितावलोको यस्मिन् नीला अलका एवालयस्तै रुपस्कृतं भूषितं उच्चनासिकं वल्गुवाक्यं यस्मिंस्तत् २३॥ २३ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

हेवीरपत्निवीरस्यममभार्येयस्तेकृतापराधस्तस्मिन्नहंब्राह्मणाकुलादन्यत्रअन्यस्मिन् सुररिपुदासादन्यत्रचदमं
दधेदंडंकरोमिकिंतुतंविगतभयंउच्चैर्मुदितंत्रिलोक्यामन्यत्रलोकत्रयादूहिरपिनपश्यामियद्वायादेवासोमरिष्य
तीत्यर्थः २४ तेवक्त्रमितःपूर्वंकदाचिदपिवितिलकंनपश्यामिसंरंभेणकोपावेशेनभीमंभयंकरंअविमृष्टनत्युज्ज्व
लंअपेतरागंस्नेहशून्यंतथातेरुजातौशौभनौस्तनावपिशोकाश्रुभिरुपहतौनपश्यामितथाविंवपलाकारमधरंच

**तस्मिन्दधेदममहंतववीरपत्नीयोन्यत्रभूसुरकुलात्कृतकिल्बिषस्तम् पश्येन**
**वीतभयमुन्मुदितंत्रिलोक्यामन्यत्रवैमुररिपोरितरत्रदासात् २४ वक्त्रंनतेविति**
**लकंमलिनंविहर्षंसंरंभभीमविमृष्टमपेतरागम् पश्येस्तनावपिशुचोपहतौ**
**सुजातौबिंबाधरंविगतकुंकुमपंकरागम् २५ तन्मेप्रसीदसुहृदःकृतकिल्बिष**
**स्यस्वैरंगतस्यमृगयांव्यसनातुरस्य कादेवरंवशगतंकुसुमास्त्रवेगविस्रस्तपौंस्त्व**
**मुशतीनभजेतकृत्ये २६ ॥** ७ विगतःकुंकुमपंकतुल्यस्तांबूलरागोयस्मात्तादृशंनपश्यामीदानींकुतएवं
जातमितिशेषःपाठांतरेएवंभूतंमुखंस्तनौचपश्यन्शंनविदामीत्यन्वयःविगतःकुंकुमपंगरागोयाभ्यामितिस्तन
योर्विशेषणम् २५ ततस्मात्कृतंकिल्बिषमपराधोयेनतस्यकिल्बिषमेवाह स्वैरंस्वातंत्र्येणत्वामपृष्ट्वामृगयांतस्मादे
वोदेवनंक्रीडातांरातिददातीतिदेवरःकांतःत्वंकामवेगेनविस्रस्तंगतंपौंस्त्वंपौरुषंधैर्यंयस्यतंउशतीकामयमानाकृ
त्येकर्त्तुयोग्येअर्थेकानभजेत् २६ इतिश्रीभागवतेटीकायांषड्विंशोऽध्यायः २६ ॥ २६ ॥ छ ॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्य्यते १ तदेवं जीवस्यानुनयादिकथासौंदर्येण त्वंतउपाधिवश्यमुक्तानं निमित्तां संसारपरंपरां निरूपयितुमाह इत्थमिति अत्र च प्रतिपदं कथंचिदध्यात्मपक्षेपि योजयितुं शक्यमेव श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृतिर्भवतीत्येतावदेव कथातात्पर्य्यं दर्शितं क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमंदधीः देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवइतिवदतातन्नादौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्य ईश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्तं

॥ इति श्रीभागवते महापुराणे चतुर्थस्कंधे पुरंजनोपाख्याने षड्विंशोऽध्यायः २६ ॥ श्री

नारद उवाच इत्थं पुरंजनं सध्र्यग्वशमानीय विभ्रमैः पुरंजनी महाराज रेमे रमयती पतिम् १ स राजा महिषीं राजन्सुस्नातां रुचिराननाम् कृतस्वस्त्ययनां तृप्तामभ्यनंदहुपागताम् २ तयोपगूढः परिरब्धकंधरो रहोऽनुमंत्रैरपकृष्टचेतनः नकालरंहो बुबुधे दुरत्ययं दिवानिशेति प्रमदापरिग्रहः ३ ॥ ततस्तदेव यथोपयोगं व्याख्यातमितिपंचाध्यायारंभः प्रतीयते प्रतिपदमध्यात्मयोजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढिप्रख्यापनमात्रत्वमयथोपयोगमेव व्याख्यास्यामः सध्र्यक् सम्यक् विभ्रमैर्विलासैः १ कृतं स्वस्त्ययनं मंगलं कुंकुमसिंदूरादिभिर्यस्यास्ताम् २ उपगूढः परिरब्धः परिरब्धा कंधरा तस्यायेन रह एकांते अनुकूलैर्गुह्यभाषणैः अपकृष्टा चेतना विवेको यस्य कालरंहः आयुर्व्ययं प्रमदैव परिग्रहो नतु ज्ञानसाधनं यस्य ३ ॥ ३ ॥ रामकृष्ण ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

महार्हतल्पेउत्कृष्टशय्यायांशयानःमहिष्याभुजउपधिःउपधानमुच्छीर्षकंयस्य अविसर्गपाठेशयनक्रियाविशेष
णंतांमहिषीमेवपरंपुरुषार्थममन्यतनतुयंनिजंरूपंब्रह्मतत्तमसाऽज्ञानेनाभिभूतोयतः ४। ५ पुत्रान्इंद्रियप
रिणामान्दुहितॄःतदनंतरंबुद्धिवृत्तीःपुत्रसंख्याचबाहुल्यमात्रविवक्षयादुहितृसंख्यातुपुत्रेभ्योन्यूनत्वेनगार्ह

शयानउन्नद्धमदोमहामनामहाऽर्हतल्पेमहिषीभुजोपधिः तामेववीरोमनुतेपरं।
यतस्तमोऽभिभूतोननिजंपरंचयत् ४ तयैवंरममाणस्यकामकश्मलचेतसः क्ष
णार्धमिवराजेंद्रव्यतिक्रांतंनवंवयः ५ तस्यामजनयत्पुत्रान्पुरंजन्यांपुरंजनः श
तान्येकादशविराडायुषोऽर्धमथात्यगात् ६ दुहितृर्दशोत्तरशतंपितृमातृयशस्क
रीः शीलौदार्यगुणोपेताःपौरंजन्यःप्रजापते ७ सपंचालपतिःपुत्रान्पितृवंशवि।
वर्धनान् दारैःसंयोजयामासदुहितॄःसदृशैर्वरैः ८ पुत्राणांचाभवन्पुत्राएकैकस्य
शतंशतम् यैर्वैपौरंजनोवंशःपंचालेषुसमेधितः ९ तेषुतद्रिक्थहारेषुगृहकोशा
नुजीविषु निरूढेनममत्वेनविषयेष्वन्वबध्यत १० ईजेचक्रतुभिर्घोरैर्दीक्षितःप
शुमारकैः देवान्पितॄन्भूतपतीन्नानाकामोयथाभवान् ११॥

३ स्त्र्यसौंदर्यार्थमेवविरा
हसंम्नाद् आयुषोऽर्धमित्याद्यपिकथासौंदर्यार्थमेव ६ पुरंजनकन्यात्वात्पौरंजन्यःहेप्रजापते ७ दारैःपरिणामानं
तरंहिताहितचिंताभिःवरैरुचितविषयभोगैः ८ पुत्राणांपुत्राःकर्माणिपंचालेषुशब्दादिविषयेषु ९ तेषुपुत्रादि
षुतेषामपियेरिक्थहाराःपुत्रास्तेषुच १०।११॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

युक्तेषु आत्महितेषु कर्मसु अनवहितस्य सवैकालः जरासमयः १२ चंडवेगः संवत्सरेणावर्त्तमानेनोपलक्षितः गंधर्वाः दिवसाः १३ गंधर्व्योरात्रयः तादृशीस्तादृश्यः मैथुन्यः दिवसैर्मिथुनीभूयस्थिताः सिताश्चासिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन सर्वैः

युक्तेष्वेवं प्रमत्तस्य कुटुंबासक्तचेतसः आससाद स वै कालो योऽप्रियः प्रिययोषिताम् १२
चंडवेग इति ख्यातो गंधर्वाधिपतिर्नृप गंधर्वास्तस्य बलिनः षष्ट्युत्तरशतत्रयम् १३ गंधर्व्यस्तादृशीरस्य मैथुन्यश्च सितासिताः परिवृत्या विलुंपंति सर्वकामविनिर्मिताम् १४
ते चंडवेगानुचराः पुरंजनपुरीं यदा हर्त्तुमारेभिरे तत्र प्रत्यषेधत्प्रजागरः १५ स सप्तभिः शतैरेको विंशत्या च शतं समाः पुरंजनपुराध्यक्षो गंधर्वैर्युयुधे बली १६ क्षीयमाणे स्वसंबंध एकस्मिन्बहुभिर्युधा चिंतां परां जगामार्त्तः सराष्ट्रपुरबांधवः १७ स एव पुर्यां मधुभुक् पंचालेषु स्वपार्षदैः उपनीतं बलिं गृण्हन् स्त्रीजितो नाविदद्भयम् १८ कालस्य दुहिता काचित्त्रिलोकीं वरमिच्छती पर्यटंती न बर्हिष्मन्प्रत्यनंदत कश्चन १९॥ १९॥

काभैः सह विनिर्मितां पुरीमपहरंति १४ प्रजागरः प्राणः १५ विंशत्या च सह १६ स्वसंबंधे स्वसंबंधिनि प्राणे १७ स एव मधुभुक् क्षुद्रसुखभोक्ता स्वपार्षदैरिंद्रियैर्नाविदत् नालोचितवान् १८ कालस्य दुहिता जराऽस्ति तां नं प्रत्यनंदत् नैच्छत् बर्हिष्मन् हे प्राचीनबर्हिः १९॥ १९॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पूरवेययातिपुत्रायतेनदत्तासतीवरमदात् ययातिःशुक्रशापात् जरांप्राप्यपुत्रानुवाचइमांगृण्हीतेतितांज्येष्ठाश्च
त्वारोनजगृहुःपूरुस्तुजगृहेततोययातिस्तस्मैराज्यंददावितिजरैवादादित्युक्तम् २० बृहद्व्रतं नैष्ठिकम् २१ प्रत्याख्या
तवतिमयिसंरभ्यक्रोधंकृत्वानैकत्रस्थातुमर्हसीतिशापमदात् २२ आधयोव्याधयश्चयवनास्तेषामीश्वरंभयनामानं

दौर्भाग्येनात्मनोलोके विश्रुतादुर्भगेतिसा यातुष्टाराजर्षयेतुदत्ताऽदात् पूरवेवरम् २०।
कदाचिद्विचरमानासाब्रह्मलोकान्महींगतम् वव्रेबृहद्व्रतंमांतुजानंतीकाममोहिता २१
प्रत्याख्यातामयासातुकालकन्याविशांपते मयिसंरभ्यविपुलमदाच्छापंसुदुःसहा।
म् स्थातुमर्हसिनैकत्रमद्याञ्ञाविमुखोमुने २२ ततोविहितसंकल्पाकन्यकायवनेश्व
रम् मयोपदिष्टमासाद्यवव्रेनाम्नाभयंपतिम् २३ ऋषभंयवनानांत्वांवृणेवीरेप्सितंप
तिम् संकल्पस्त्वयिभूतानांकृतःकिलनरिष्यति २४ द्वाविमावनुशोचंति बालावस।
द्ग्रहो यल्लोकशास्त्रोपनतंनरातिनतदिच्छति २५ अथोभजस्वमांभद्रभजंतीमे।
दयांकुरु एतावान् पौरुषोधर्मोयदार्त्ताननुकंपते २६ वव्रेश्चरेवीरत्वामीप्सितंपतिंवृणे नरिष्यतिनन
श्यति २४ लोकतोवेदतश्चयद्देयत्वेनग्राह्यत्वेनचउपनतंप्राप्तंतत् याच्यमानंयोनददातियश्चदीयमानंनेच्छतिन
गृण्हातिइमौद्वौकर्मभूतावनुशोचंतिसंतः २५ पुरुषेणकर्त्तव्योधर्मःपौरुषः २६ ॥ २६ ॥ ॐ ॥ ॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

देवगुह्यंमरणंतद्धिप्राणिनांवैराग्यानुदयायदेवैर्गोप्यते २७ तुभ्यंतवआत्मसमाधिनाज्ञानदृष्ट्यायाच्यमानोयंलोकस्त्वां नेच्छति २८ अतोव्यक्तगतिःकुतःप्राप्नेत्यलक्षितगतिःसतीलोकमाक्रम्यभुंक्ष्वएवंसर्वोऽपिलोकस्तवपतिःस्यादि त्यर्थःनचैवंत्वयाशंकनीयंमांप्रतिकूलंलोकोहनिष्यतीतियस्मात्त्वमेवप्रजानाशंकरिष्यसीत्याह याहीति याम

कालकन्योदितवचोनिशम्ययवनेश्वरः चिकीर्षुर्देवगुह्यंसःसस्मितंतामभाषत २७ मयानिरूपितस्तुभ्यंपतिरात्मसमाधिना नाभिनंदतिलोकोऽयंत्वामभद्रामसंमताम् २८ त्वमव्यक्तगतिर्भुंक्ष्वलोकंकर्मविनिर्मितम् याहिमेपृतनायुक्ताप्रजा नाशंप्रणेष्यसि २९ प्रज्वारोऽयंममभ्राातात्वंचमेभगिनीभव चराम्युभाभ्यांलोके स्मिन्नव्यक्तोभीमसैनिकः ३० ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपुरंजनोपा ख्यानेसप्तविंशोध्यायः २७ नारदउवाच सैनिकाभयनाम्नोयेबर्हिष्मन्दिष्टकारिणः प्रज्वार कालकन्याभ्यांविचेरुरवनीमिमाम् १ ॥

हीयायवनपृतनातयायुक्ता २९ किंच प्रज्वारइतिमारकोवैष्णवोज्वरःमाहेश्वरस्यव्याध्यंतःपातित्वात्भीमाःघोराःसैनिकायस्य ३० ॥ इतिश्रीभागवतेम हापुराणेचतुर्थस्कंधेटीकायांसप्तविंशोऽध्यायःसमाप्तः ॥ २७ ॥ अष्टाविंशेतुवैदर्भ्याख्यानेनस्त्रीविचिंतयास्त्रीत्व प्राप्तस्यदैवेनकदाचिन्मुक्तिरुच्यते १ इदानींतुपुरंजनस्यपुंदेहत्यागप्रकारपूर्वकंस्त्रीत्वप्रकारमाह सैनिकाइत्यादि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

राजसिंहस्यवेश्मनीत्यंतेनदृष्टंदैवंकुर्वंतिअधिकुर्वंतीतितथामृत्योरादेशकारिणइतिवा १॥ ॐ ॥जरत्पन्नगे॰
नजीर्णज्ञाणेनपालितामृ॥३ द्वाभिःचक्षुरादिभिःरोगरूपेणप्रविश्य ४। ५ कन्ययाजरयोपगूढःसन्तत्प्रतिक्रियांन॰
लेभेइतितृतीयेनान्वयः हृतैश्वर्यउत्थानादिषशक्तेः ६ प्रतिकूलान्अनपेक्षितविषयप्रापणान्अनादृतान्आदृ

तएकदातुरभसापुरंजनपुरंनृप रुरुधुर्भौमभोगाढ्यांजरत्पन्नगपालिताम् २ का॰
लकन्यापिबुभुजेपुरंजनपुरंबलात् ययाभिभूतःपुरुषःसद्योनिःसारतामियात्॥
३ तयोपभुज्यमानांवैयवनाःसर्वतोदिशम् द्वाभिःप्रविश्यसुभृशंप्रार्दयन्सकलांपुरी
म् ४ तस्यांप्रपीड्यमानायामभिमानीपुरंजनः अवापोरुविधांस्तापान्कुटुंबीममता॰
कुलः ५ कन्योपगूढोनष्टश्रीःकृपणोविषयात्मकः नष्टप्रज्ञोहृतैश्वर्योगंधर्वयवनैर्ब
लात् ६ विशीर्णांस्वपुरींवीक्ष्यप्रतिकूलाननादृतान्पुत्रान्पौत्रानुगामात्यान्जायां॰
चगतसौहृदाम् ७ आत्मानंकन्ययाग्रस्तंपंचालानरिदूषितान् दुरंतचिंतामापन्नो॰
नलेभेतत्प्रतिक्रियाम् ८ ॥ ८ ॥ रामः ॥

ॐ मत्कुर्वाणानस्वाधीनत्वाभावात्अनुगाइं
द्रियाणिअमात्याइंद्रियदेवाः गतसौहृदांअध्यवसायाभावात् ७ आत्मानमितिजरयाग्रस्तम् पंचालान्विषयान्
अरिभिर्विघ्नादिभिर्दूषितान् ८ ॥ ८ ॥ ८ ॥ ८ ॥ ॐ ॥ ॐ ॥ ॐ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कालकन्यया हेतुभूतया यातयामान् निःसारानपि कामान् अभिलषन् विगता आत्मनो गतिः पारलौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य स स्नेहादिति वा पाठः ९ स राजा पुरंजनो हा तं प्रचक्रमे उपक्रांतवानिति द्वयोरन्वयः अनिकाम तः अनिच्छयापि १०। ११ सपरिच्छदः भृत्युवर्गसहितः कुटुंबेन रीव्यतीति कौटुंबिकः कुटुंबिन्या संधिनीत्र विवस

कामानभिलषन्दीनो यातयामांश्च कन्यया विगतात्मगतिस्नेहः पुत्रदारांश्च लाल॰ यन् ९ गंधर्वयवनाक्रांतां कालकन्योपमर्दिताम् हातुं प्रचक्रमे राजा तां पुरीमनिका मतः १० भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ददाह तां पुरीं कृत्स्नां भ्रातुः प्रिय॰ चिकीर्षया ११ तस्यां संदह्यमानायां सपौरः सपरिच्छदः कौटुंबिकः कुटुंबिन्या उपत प्यत सान्वयः १२ यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया पुर्यां प्रज्वारसंसृष्टः पुर पालोन्वतप्यत १३ न शेके सोऽवितुं तत्र पुरुकृच्छ्रोरुवेपथुः गंतुमैच्छत्ततो वृक्षकोट राद्दिवसानलात् १४ शिथिलावयवो यर्हि गंधर्वैर्हृतपौरुषः यवनैररिभी राजन्नुपरु द्धो रुरोद ह १५ दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान् ॥ ९ तः सान्वयः पुत्रादिसहितः १२ यवनैरुपरुद्धान्यायतनानि यस्य सः पुरपालः १३ पुरुबहु कृच्छ्रं तेन उरुर्वेपथुर्यस्य वृक्षकोटरादिव सर्पः १४ कंठे उप रुद्धो रुरोद घुरघुरध्वनिं चकार १५ दुहित्रादीन् ध्याविस्युत्तरेणान्वयः जामयो भ्रातृस्वसारः सलमात्रेणावशिष्टम् ॥ ९ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भोगस्तु प्रागेव क्षीणः १६। १७। ध्यानमेवाह लोकांतरमिति १८ अनाशिते अभोजिते भर्त्सिते भर्त्सने कृते यतवाग्भव
ति १९ अज्ञं अविवेकिनं मां व्युषिते देशांतरङ्गते गृहमेधीयं वर्त्म गृहधर्मं अपि किं नेष्यति अनुवर्त्तयिष्यति युक्त
मेतत् यतो वीरसूः पुत्रवती किं वा महं विरहमसहमाना मरिष्यत्येवेत्यर्थः २० न विद्यते परमयनमाश्रयो येषां तेअ

स्त्वत्तावशिष्टं यत्किंचिद्गृहकोशपरिच्छदम् १६ अहंममेति स्वीकृत्य गृहेषु कुमति।
र्गृही दध्यौ प्रमदयादीनो विप्रयोग उपस्थिते १७ लोकांतरं गतवति मय्यनाथा कुटुंबि
नी वर्त्तिष्यते कथं त्वेषा बालकाननुशोचती १८ न मय्यनाशिते भुंक्ते स्नाते स्नाति तिम।
त्परा मयि रुष्टे स्फुसंत्रस्ता भर्त्सिते यतवाग्भयात् १९ प्रबोधयति मामज्ञं व्युषिते शो।
ककर्षिता वर्त्मैतद्गृहमेधीयं वीरसूरपि नेष्यति २० कथं नु दारका दीना दारिकावाप।
रायणाः वर्त्तिष्यंते मयि गते भिन्ननाव इवोदधौ २१ एवं कृपणया बुध्या शोचंतमतद
र्हणम् ग्रहीतुं कृतधीरेनं भयनामा भ्यपद्यत २२ पशुवद्यवनैरेष नीयमानः स्वकं क्ष
यम् अन्वद्रवन्ननुपथाः शोचंतो भृशमातुराः २३॥

रायणाः पुत्राः कन्याश्च यद्वा पराश्रयाः।
कन्या भिन्नानौर्येषाम् २१ अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वात् २२ एषः यदा स्वयं स्थानं नीयमानः तदा अनुपथाः प्राणा
इंद्रियाणि च तथा च श्रुतिः तमुत्क्रामंतं प्राणोऽनूत्क्रामति प्राणमुत्क्रामंतं सर्वे प्राणा अनुत्क्रामंतीति २३॥ २३॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्रकृतिं महाभूतात्मताम् २४ नाविंदत् न सस्मार पुरः पूर्वं सखायं संतम् ईश्वरम् २५ अदयालुना काम्यकर्मरूपयेसंज्ञज्ञाः हताः अमीवं पापकौर्यवा २६ शाश्वतीः समाः बहून् संवत्सरान् आर्त्तिम् अनुभूय २७ अंतकाले तां भार्यामेव मनसा गृह्णन् स्मरन् अनंतरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव अतः परमस्मिन् प्रकरणे एतावदेव प्रकृतोपयोगि विवक्षितं स्त्रीध्यानेन स्त्रीत्वं प्राप्नावपि पतिव्रताध्यानेन पूर्वादृष्टेन च धार्मिकात् विदर्भाज्जन्माभूत् धार्मिकसंगेन च विशुद्धस्य

पुरीं विहायोपगत उपरुद्धो भुजंगमः यदा तमेवानु पुरी विशीर्णा प्रकृतिं गता २४ विकृष्यमाणः प्रसभं यवनेन बलीयसा नाविंदत्तमसाविष्टः सखायं सुहृदं पुरः २५ तं यज्ञपशवोनेन संज्ञप्ता ये दयालुना कुठारैश्छिच्छिदुः क्रुद्धाः स्मरंतोऽमीवमस्य तत् २६ अनंतपारे तमसि मग्नो नष्टस्मृतिः समाः शाश्वतीरनुभूयार्त्तिं प्रमदासंगदूषितः २७ तामेव मनसा गृण्हन्बभूव प्रमदोत्तमा अनंतरं विदर्भस्य राजसिंहस्य वेश्मनि २८ ॥ २८ ॥ ऽ भागवतेन मलयध्वजेन संगोऽभूत्ततो विष्णुभक्तिः ततो वैराग्यं ततस्तमेव भर्त्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो भगवत्प्रसादलब्धज्ञानेन मोक्ष इति अन्यत्तु कथाऽलंकारमात्रं तथाऽपि किंचित् किंचिद्वृत्तिसामान्येनेह योजयिष्यामः विदर्भस्य विशिष्टधर्मोपलक्षितस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन न हि यज्ञादिना वक्षत्रिया राजंनेतेषु श्रेष्ठस्य वेश्मनि २८ ॥ २८ ॥ ॐ ॥ ९ ॥

॥ ९ ॥ श्रीसीतारामचंद्रार्पणमस्तु ॥ ९ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

मलयोपलक्षितेदक्षिणदेशे ध्वजइवदर्शनीयः सहि श्रीविष्णुभक्तप्रधानोदेशः तन्नमुख्यः महाभागवतइत्यर्थः पं
डानिश्चयाबुद्धिः तामर्हतीतिपांड्यः सउपयेमेपरंजनोभागवतसंगंप्राप्तइत्यर्थः २९ आत्मजांश्रीकृष्णसेवारुचिंत
त्संगेनभगवद्धर्मेरुचिरभूदित्यर्थः असितस्यश्रीकृष्णस्येक्षणययातांयवीयसः सप्तसुतान् श्रवणंकीर्त्तनंविष्णोः
स्मरणंपादसेवनम् अर्चनंवंदनंदास्यमितिभक्तिप्रकारान्सख्यात्मनिवेदनयोस्त्वंपदार्थज्ञानोत्तरकालत्वात्तस्य
चभगवतैवोत्तरत्रोपदेक्ष्यमाणत्वात्इदानीमनसत्तः सप्तेत्युक्तंभगवद्धर्मरुच्याततश्रवणाकीर्त्तनादिकंजातमित्यर्थः

**उपयेमेवीर्यपणांवैदर्भींमलयध्वजः युधिनिर्जित्यराजन्यान्पांड्यःपरपुरंजयः२९**
**तस्यांसजनयांचक्रआत्मजामसितेक्षणाम् यवीयसःसप्तसुतान्सप्तद्रविडभूभृतः**
**३० एकैकस्याभवत्तेषांराजन्नर्बुदमर्बुदम् भोक्ष्यतेयद्वंशधरैर्महीमन्वंतरंपरम् ३१॥**
**अगस्त्यःप्रागदुहितरमुपयेमेधृतव्रताम्॥ ॐ॥**

ॐ द्रविडभूमिपालकान् द्रविडभूमिर्हिश्रव
णादिभक्तिरेवरक्षिताऽस्तीतिप्रसिद्धम् ३० अर्बुदमितिश्रवणादीनांप्रत्येकमनेकप्रकारा अभवन्नित्यर्थः त
दुक्तंभक्तियोगोबहुविधोमार्गैर्भामिनिभाव्यतेइतियेषांवंशधरैः यतःप्रवृत्तैः संप्रदायभेदैः कृत्स्नामहीमन्वंतरंततः
परंचभोक्ष्यतेअविद्याकामकर्मभ्योपिरक्षिष्यते ३१ अगानिनिष्क्रियाणिगात्राणिस्त्यायतिसंघातयतीत्यगस्त्योम
नः सप्राक् प्रथमजातांदुहितरंकृष्णसेवारुचिमुपयेमे तस्यांमनःकृष्णेदृढांरतिंबवंधेत्यर्थः धृतानिशमदमादी
निव्रतानियया तांरतिंदृढभ्यः सत्यलोकादिभोगेभ्योपिच्युतस्तद्दृहितः कृष्णरताविहामुत्रभोगविरागोजातइत्य

सएवोपशमात्मकलान्मुनिः कथंभूतः इध्मवाह आत्मजो यस्य सः तद्विज्ञानार्थंसद्गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्मनिष्ठं इत्यादिश्रुतिप्रसिद्धासमिद्वहनोपलक्षितायरूपसच्चिद्वैराग्यादभूदित्यर्थः तस्यविरक्तस्यगुरूपसत्तिःसंभवतिकथापक्षेयथाश्रुतमेव ३२ क्ष्मांविभज्यतत्रश्रवणादिभक्तिभेदंव्यवस्थाप्य ३३ इदानींपुरंजनस्यस्त्रीभावंप्राप्त

यस्यां दृढच्युतोजातइध्मवाहात्मजोमुनिः ३२ विभज्यतनयेभ्यःक्ष्मांराजर्षिर्मलयध्वजः आरिराधयिषुःकृष्णंसजगामकुलाचलम् ३३ हित्वागृहान्सुतान्भोगान्वैदर्भीमदिरेक्षणा अन्वधावतपांड्येशंज्योत्स्नेवरजनीकरम् ३४ तत्रचंद्रवसानामताम्रपर्णीवटोदका तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनोमृजन् ३५ कंदाष्टिभिर्मूलफलैःपुष्पपर्णैस्तृणोदकैः वर्त्तमानःशनैर्गात्रकर्षणंतपआस्थितः ३६ शीतोष्णवातवर्षाणिक्षुत्पिपासेप्रियाप्रिये सुखदुःखइतिद्वंद्वान्यजयत्समदर्शनः ३७ तपसाविद्ययापक्वकषायोनियमैर्यमैः युयुजेब्रह्मण्यात्मानंविजिताक्षानिलाशयः ३८ ॥ ॐ सस्सर्वतोविरक्तस्यपतिरेवगुरुः स्त्रीणामितिवचनात्पतिसेवयागुरुशुश्रूषाप्रकारंदर्शयितुमाह हित्वेत्यादिनामनोदधइत्यंतेनग्रंथेनमदयतीतिमदिरंईक्षणंयस्याः ३४ तत्रचंद्रवसाद्यानद्यःतासांपुण्यैःसलिलैरुभयत्रअंतर्बहिश्चआत्मनोमलंक्षालयन् तपआस्थितइत्युत्तरेणान्वयः ३५ अस्यतेभूमौक्षिप्यतइत्यष्टिर्बीजम् ३६ । ३७ विद्ययाउपासनयापक्वकषायःदग्ध

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कामादिवासनः युयुजे आत्मनो ब्रह्म तां भावयामास अक्षाणीन्द्रियाणि अनिलः प्राणः आशयश्चित्तं विजिता अक्षा
द्ययेन ३८ ॥ ९ ॥ आस्तेस्म वर्षशतमिति ज्ञानस्य दुःसाधनतां दर्शयतीति अत एव भक्तिं कृतवानित्याह वासुदेवे
रतिमुद्वहन् अन्यद्देहादिकं न वेद ३९ स एवं वर्त्तमानः आत्मन्यात्मानं विद्वान् अन्यस्मात्तु उपरराम कथं विद्वान् व्यति-
रिक्ततया देहादिव्यतिरिक्तत्वेन कुतः व्यापकतया देहादिप्रकाशकत्वेन न तु देहाद्याकारो विमर्श एतत्प्रकाशयति ननु
निराकार आत्मा ऽत आह आमर्शस्यापि साक्षिणं अयं भावः आमर्शो नामान्तःकरणवृत्तिः सा च जडत्वादात्मप्रकाशकाश्ये

आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थिरः वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिम् ॥
३९ स व्यापकतयात्मानं व्यतिरिक्ततयात्मनि विद्वान्स्वप्न इवामर्शसाक्षिणं विरराम ह
४० साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम्
४१ परे ब्रह्मणि चात्मानं परं ब्रह्म तथात्मनि ॥ ९ ॥

९ वेति यथा स्वप्ने मम मेदं शिरश्छिन्नमित्यादिप्र-
तीतौ न द्व्यतिरिक्तमात्मानं वेत्ति तद्वत् ४० केन विद्वांस्तत्राह साक्षाद्धरिरेव यो गुरुस्तेनोक्तेन सर्वतोमुखं यथा तथा स्फुर-
ता अनवच्छिन्नेन ज्ञानेन ४१ तदेवाह पर इति ब्रह्मैवाहं न संसारीति ब्रह्मण्यात्मन ईक्षणे शोकादिनिवृत्तिः अहमेव ब्रह्मे-
त्यात्मनि ब्रह्मण ईक्षणे ब्रह्म पारोक्ष्यं निवृत्तिरितो व्यतिहारेणेक्षमाण अस्मात्संसारात्तु उपरराम नन्वेवमपि जीवस्य कृतो ।
ब्रह्मत्वापत्तिः ईक्षणस्यैवव्यवधायकत्वादित्याशंक्याह ईक्षां विहाय दग्धेंधनानलवत् तस्थौ ॥ ९ ॥ ९ ॥ ९ ॥

श्रीभवानीशंकरार्पणमस्तु ॥ ९ ॥ रामः ॥ ९ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्वयमेवोपशांतेरितिभावः ४२ उपपतिंपत्युःसमीपे यद्वापत्युः किंचिन्मात्रंन्यूनातत्समानासतीबभाविसर्थः उपोधिकेचे-
तिकर्मप्रवचनीयः तद्योगेचद्वितीया शांतमंगारावस्थमनलंउपशांताश्रृङ्गाज्वालायथाभवतितद्वत् ४३। ४४ तदानीम-

ईक्ष्यमाणोविहायेक्षामस्मादुपरराम ह ४२ पतिंपरमधर्मज्ञंवैदर्भीमलयध्वजम् प्रे-
म्णापर्यचरद्धित्वाभोगान्सापतिदेवता ४३ चीरवासाव्रतक्षामावेणीभूतशिरोरुहा॥
बभावुपपतिंशांताशिखाशांतमिवानलम् ४४ अजानतीप्रियतमंयदोपरतमंगना
स्थिरासनमासाद्ययथापूर्वमुपाचरत् ४५ यदानोपालभेतांघ्रावूष्माणंपत्युरर्चती।
आसीत्संविग्नहृदयायूथभ्रष्टामृगीयथा ४६ आत्मानंशोचतीदीनमबंधुंविक्लवाश्रु
भिःस्तनावासिच्यविपिनेसुस्वरम्प्ररुरोदसा ४७ उत्तिष्ठोत्तिष्ठराजर्षेइमामुदधिमेख
लाम् दस्युभ्यःक्षत्रबंधुभ्योबिभ्यतींपातुमर्हसि ४८ एवंविलपतीबालाविपिनेऽनुग
तापतिम् पतितापादयोर्भर्त्तूरुदत्यश्रूण्यवर्त्तयत् ४९ ॥ ४९ ॥

१ स्थिरमासनं
यस्य अतएवाजानतीयदातदायथापूर्वमसेवत ४५ पत्युरंघ्रिमर्चयतीयदातस्मिन्नंघ्रावूष्माणंनापश्यत् ४६ अबंधुंप
तिरहितम् अश्रुभिरासिच्य ४७ क्षत्रबंधुभ्यः अधार्मिकक्षत्रियेभ्योपि ४८ अवर्त्तयत् प्रवर्त्तयामास ४९ ॥ २ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तस्यांनिधाय अग्निदानेनादीप्यच ५० पूर्वतरः अनादिरीश्वरः सखाद्वासुपर्णाविति श्रुतेः साम्नाप्रियवाक्येन संबोधयन् ५१ यस्यप्रशोचति अग्रेसृष्टेः पूर्वं विचचर्थह मयिस्थितत्वेन सख्यसुखं अनुभूतवानसि ५२ यद्यपिमां नजानासि नयाप्यात्मानंत्वाम विज्ञातसखं अविज्ञातः कश्चिन्मेसखा आसीदित्येवं किंस्मरसिसखइतिपुंस्त्वनिर्देशः आत्म

चितिंदारुमयीं चित्वातस्यांपत्युःकलेवरम् आदीप्यचानुमरणेविलपंतीमनोदधे।
५० तत्रपूर्वतरःकश्चित्सखाब्राह्मण आत्मवान् सांत्वयन्वल्गुनासाम्नातामाहरु
दतीप्रभो ५१ ब्राह्मणउवाच कात्वंकस्यासिकोवायंशयानोयस्यशोचसि जानासि।
किंसखायंमांयेनाग्रेविचचर्थह ५२ अपिस्मरसिचात्मानमविज्ञातसखंसखे हि
त्वामांपदमन्विच्छन्भौमभोगरतोगतः ५३ हंसावहंचत्वंचार्यसखायोमानसायनौ॥
अभूतामंतरावौकःसहस्रपरिवत्सरान् ५४ सत्वंविहायमांबंधोगतोग्राम्यमतिर्म
हीम् विचरन्पदमद्राक्षीःकयाचिन्निर्मितंस्त्रिया ५५ ॥ ५५ ॥ नपुंस्त्वस्मरणायसख्यं

स्मारयन्स्ववियोगकृतमनर्थमाह हित्वेतिसार्द्धैःषड्भिःपदंस्थानम् ५३ हंसौशुद्धौमानसंहृदयमयनंययोः कथापक्षेमानससरसिस्थितौपक्षिणावभूतांजातौ ओकोगृहं अंतराविनैववाशब्दएवकार्थेसहस्रपरिवत्सरान्महाप्रलयोपर्यावत् ५४ हेबंधोग्राम्यसुखेमतिर्यस्यस्त्रियामायया ५५ ॥ ५५ ॥ ॥ ॥ रामः ॥ 



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पंचारामाउपवनानियस्मिन्नवद्वाराणिप्राणच्छिद्राणियस्मिन्एकःप्राणःपालोयस्मिन्त्रीणिपृथिव्यप्तेजांसिको^
ष्ठानिप्राकारायस्मिन्षड्ज्ञानेंद्रियमनांसिकुलानिअभीष्टविषयसमर्पकावणिजोयस्मिन्पंचविपणोहट्टाःक^
र्मेंद्रियाणियस्मिन्पंचभूतानिप्रकृतिःउपादानकारणंयस्यस्त्रीबुद्धिरेवधवःपतिःस्वामिनीयस्मिन् ५६ स्वय
मेवेमंश्लोकंव्याचष्टेपंचेंद्रियार्थइतिषट्कुलमितिषट्त्वंचएकपालमितिचस्पष्टत्वान्नव्याख्यातम् ५७ भूतान्येक

पंचारामंनवद्वारमेकपालंत्रिकोष्ठकम् षट्कुलंपंचविपणंपंचप्रकृतिस्त्री
धवम् ५६ पंचेंद्रियार्थाआरामाद्वारःप्राणानवप्रभो तेजोऽबन्नानिकोष्ठानिकुलमिं
द्रियसंग्रहः ५७ विपणस्तुक्रियाशक्तिर्भूतप्रकृतिरव्यया शक्त्यधीशःपुमांस्त्वत्र
प्रविष्टोनावबुध्यते ५८ तस्मिंस्त्वंरामयास्पृष्टोरममाणोऽश्रुतस्मृतिः तत्संगादीदृ
शींप्राप्तोदशांपापीयसींविभो ५९ नत्वंविदर्भदुहितानायंवीरःसुहृत्तव नत्वंपतिः
पुरंजन्यारुद्धोनवमुखेयया ६० मायाह्येषामयासृष्टायत्पुमांसंस्त्रियंसतीम् मन्य^
सेनोभयंयद्वैहंसौपश्यावयोर्गतिम् ६१ ॥ अव्ययाप्रकृतिरुपादानंयस्यस्त्रीधवमित्यस्यव्या^
ख्यानं शक्तिरधीशायस्यतद्वशःसन्नित्यर्थः ५८ स्पृष्टःअभिभूतअतोनविद्यतेश्रुतेब्रह्मणिस्मृतिर्यस्य ५९ नत्व
मुपदिशति नत्वमितिचतुर्भिःसुहृत्सतिःनवद्वारेपुरेययारुद्धोऽसितस्याः ६० पुमांसंपूर्वजन्मनियद्मन्यथाइदा
नींचसतींश्रेष्ठांस्त्रियंयन्मन्यसेएषामायायतःउभयमपिवस्तुनोनास्तियस्मादावांहंसौशुद्धौनोआवयोर्वक्ष्यमाणांग

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तत्त्वंपदार्थयोश्चिदंशेनऐक्यमाह अहमेवभवानउपचारंवारयति नचान्यइति व्यतिहारोदेशउक्ताभिप्रायःछि
द्रमंतरम् ६२ तर्हिकथमावयोरज्ञत्वसर्वज्ञत्वादिधर्मभेदस्तत्राह यथेति आत्मानंदेहमादर्शे निर्मलंमहांतंस्थिरंवा
विक्षेतपरस्यचक्षुषि चतद्विपरीतंविद्याविद्योपाधिकृतोधर्मभेदइत्यर्थः ६३ एवंनारदवाक्यंएवममुनाप्रकारेणसमा

अहंभवान्नचान्यस्त्वंत्वमेवाहंविचक्ष्वभो ननौपश्यंतिकवयश्छिद्रंजातुमनागपि। ६२ यथापुरुषआत्मानमेकमादर्शचक्षुषोः द्विधाभूतमवेक्षेतनथैवांतरमावयोः ६३ एवंसमानसोहंसोहंसेनप्रतिबोधितः स्वस्थस्तद्व्यभिचारेणनष्टामापपुनःस्मृतिम् ६४ बर्हिष्मन्नेतदध्यात्मंपारोक्ष्येणप्रदर्शितम् यत्परोक्षप्रियोदेवोभगवान्विश्वभावनः ६५ ॥इतिश्रीभा०चे०ऽष्टाविंशोध्यायः २८॥ प्राचीनबर्हिरुवाच ॥ भगवंस्ते वचोऽस्माभिर्नसम्यगवगम्यते कवयस्तद्विजानंतिनवयंकर्ममोहिताः १॥ १ ॥

नसोऽहंसः हंसेनपरमात्मनाबोधितःसन्स्वस्थःआत्मनिस्थितःसन्चिरंध्यात्वातद्व्यभिचारेणईश्वरवियोगेनविष
याऽभिलाषबुध्यानष्टांस्मृतिंअहंब्रह्मास्मीतिज्ञानंपुनःप्राप्तवान् ६४ कथामात्रमितिबुद्धिंवारयतिबर्हिष्मन्निति
पारोक्ष्येणराजकथामिषेणतत्रहेतुःयद्यस्मात्हेबर्हिष्मन्प्राचीनबर्हिःएतद्राजकथामिषेणज्ञानकथनेनतवचेत
सिकथानायातीतिभावः ६५ इति०च०मष्टाविंशः २८ ऊनत्रिंशेपरोक्षार्थव्याख्यानेनोपसंहृतम् स्त्रीसंगतोभवस्त्वी



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

श्संगान्मुक्तिरितिस्फुटम् १ कवयअध्यात्मविदः १॥ ६ ॥व्यनक्तिलिंगयतिचेतनीकरोतीत्यर्थः यद्वाव्यनक्ति प्रकटयति ततश्चस्वकर्मणापुरंजनयतीतिपुरंजनपदंव्याख्यातंभवति एकद्व्यादयःपादायस्य २ अविज्ञातशब्देन आहृतःव्याहृतःउक्तोयःसईश्वरः अविज्ञातनामनिरुक्तिः यद्यस्मात् पुंभिर्नामादियोगेननविज्ञायते ३ तत्रतेषु

नारदउवाच पुरुषंपुरंजनंविद्याद्यद्व्यनक्त्यात्मनःपुरः एकद्वित्रिचतुष्पादंबहु पादमपादकम् २ योऽविज्ञाताहृतस्तस्यपुरुषस्यसखेश्वरः यन्नविज्ञायतेपुंभि र्नामभिर्वाक्रियागुणैः ३ यदाजिघृक्षन्पुरुषःकार्त्स्न्येनप्रकृतेर्गुणान् नवद्वारंद्विहस्तांघ्रितत्रामनुतसाध्विति ४ बुद्धिंतुप्रमदांविद्यात्ममाहमितियत्कृतम् यामधिष्ठायदेहेस्मिन्पुमान्भुंक्तेऽक्षिभिर्गुणान् ५ सखायइंद्रियगणाज्ञानंकर्मचयत्कृतम् सख्यस्तद्वृत्तयःप्राणःपंचवृत्तिर्यथोरगः ६ बृहद्बलंमनोविद्यादुभयेंद्रियनायकम् पंचालाःपंचविषयायन्मध्येनवखंपुरम् ७ अक्षिणीनासिकेकर्णौमुखंशिश्नगुदाविति द्वेद्वेद्वारौबहिर्यातियस्तदिंद्रियसंयुतः ८ ॥ ५ पुरेषुमध्ये ४ अक्षिभिरिंद्रियैः ५ पंचवृत्तित्वात्पंचशिराःसर्पइवप्राणः ६ एकादशमहाभटइत्यत्रैकादशोमहाभटोनायकइत्युक्तःतंदर्शयति बृहद्बलंयस्यतन्मनः नवखानिद्वाराणियस्य ७ द्युमत्स्वइत्यादेरर्थसंक्षेपेणाह यस्तदिंद्रियसंयुतःसआत्मानाभिर्द्वौ

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

पुरः पूर्वभोगे कृताः ९ नेत्रे इति रूपमिति चक्षुषेति खद्योतादीनां व्याख्यानं शेषोऽनुवादः ईश्वरः पुरञ्जनः १० नासे इति व्याख्या अवधुनोतीत्यवधूतो वायुस्तदात्मके नोच्छ्वासेन सहैकस्थानत्वात् घ्राणोऽवधूतः आस्यमिति व्या

अक्षिणी नासिके आस्यमिति पंच पुरस्कृताः दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः पश्चिमे इत्यधो द्वारौ गुदं शिश्नमिहोच्यते ९ खद्योताविर्मुखी चात्र नेत्रे एकत्र निर्मिते रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः १० नलिनी नालिनी नासे गंधः सौरभ उच्यते घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः ११ आपणो व्यवहारोत्र चित्रमंधो बहूदनम् पितृहूर्दक्षिणः कर्ण उत्तरो देवहूः स्मृतः १२ प्रवृत्तं च निवृत्तं च शास्त्रं पंचालसंज्ञितम् पितृयानं देवयानं श्रोत्राच्छ्रुतधराद्व्रजेत् १३ आसुरी मेढ्रमर्वाग्द्वार्व्यवायो ग्रामिणां रतिः उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते १४ वैशसं नरकं पायुर्लुब्धकोऽधौ तु मे शृणु हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च १५ अंतःपुरं च हृदयं विषूचिर्मन उच्यते॥ ७ ॥ ११ रव्यारसज्ञविपणान्वित इत्यत्र रसज्ञशब्दनिर्दिष्टस्य रसविदित्यनुवादः रस इति व्याख्या रसनेन्द्रियमित्यर्थः विपणो वाग्रसविद्रस इत्येव पाठः आर्षत्वान्न दोषः अक्षराधिक्यः ११ अंधः अन्नम् १२।१३ ग्रामक मित्यस्यानुवादः ग्रामिणां रतिरिति तस्य व्याख्या व्यवाय इति १४।१५ विषूचीन पदार्थानुवादो वि



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

शुचिरितितद्गुणैर्मनोगुणैस्तमःसत्वरजोभिः १६ महिषीयद्यदीहेतेत्यादेरर्थंसंगृत्याह यथायथाबुद्धिःस्वप्नेविक्रियतेजाग्र
तिविकरोतिवाइंद्रियाणिपरिणमयतितस्यागुणैरक्तोलिप्तआत्मातथातथातस्याःवृत्तीर्दर्शनस्पर्शनाद्याःकेवलमुपद्रष्टै
वसन्बलादनुकार्यते १७ आशुगमित्येतद्व्याचष्टेसंवत्सरस्येवाप्रतिहतोरयो वेगःप्रतीतितोयस्यसंवत्सररयःवस्तु
तस्त्वऽगतिःस्वप्नशरीरादेर्बुद्धावेवविरचितत्वेनदेशांतरेगत्यभावात् पाठांतरेसंवत्सरश्चतत्कृतंवयश्चताभ्यांगतिर्यस्येति।

तत्रमोहंप्रसादंवाहर्षंप्राप्नोतितद्गुणैः १६ यथायथाविक्रियतेगुणाक्तोविकरोतिवा तथा।
तथोपद्रष्टात्मातद्वृत्तीरनुकार्यते १७ देहोरथस्त्विंद्रियाश्वःसंवत्सररयोगतिः द्विकर्म।
चक्रस्त्रिगुणध्वजःपंचासुबंधुरः १८ मनोरश्मिर्बुद्धिसूतोहृन्नीडोद्वंद्वकूबरः पंचेंद्रि
यार्थप्रक्षेपःसप्तधातुवरूथकः १९ आकूतिर्विक्रमोबाह्योमृगतृष्णांप्रधावति ए
कादशेंद्रियचमूःपंचसूनाविनोदकृत् २० संवत्सरश्चंडवेगःकालोयेनोपलक्षितः।
तस्याहानीहगंधर्वागंधर्व्योरात्रयःस्मृताः हरंत्यायुःपरिक्रांत्याषष्ट्युत्तरशतत्रयम् ॥ २१

द्वीपमित्यस्यव्याख्यानारदेनकृता द्विचक्रमित्यस्यव्याख्याद्विकर्मचक्रइतित्रिगुणध्वजइतित्रिवेणुपदव्याख्या १८।
पंचप्रहरणमित्येतद्व्याचष्टेपंचेंद्रियार्थप्रक्षेपइति १९ पंचेंद्रियैःसूनाविनोदमिवान्यायेनविषयसेवांकरोतीतिपंच
सूनाविनोदकृत् अनेनचचारमृगयांतत्रेत्यादिव्याख्यातम् २० परिक्रांत्यापरिभ्रमणेन २१ ॥ २१ ॥ ६.

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भा०च० भगिनीत्वेन जगृहे लोकानां क्षयाय २२ चराः संचारिणः भूतानामुपसर्गे पीडायां आशुः शीघ्रो मृत्युहेतुः रयो वेगो यस्य स प्र।
टी० ज्वारस्येति प्रशब्दस्य व्याख्या पाठांतरे भूतकृताः अरयो नेनच अरिभिरुपद्रुत इत्यरिपदं व्याख्यातं द्विविधः शीतोष्णरूपेण प्र
११३ वेशनिर्गमभेदात् २३ एवं परोक्षत्वेनोक्तमर्थं व्याख्याय सर्वकथातात्पर्यमाह एवमित्यादि चिरमक्रमेणेत्यंतेन आधिदै
विकादिभिर्दुःखैः क्लिश्यमानो ममाहमिति देहे शतं वर्षाणि शेते वर्त्तत इति द्वयोरन्वयः २४ अशनापिपासादीन् प्राणधर्मा।

कालकन्याजरासाक्षाल्लोकस्तां नाभिनंदति स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः।
२२ आधयो व्याधयस्तस्य सैनिका यवनाश्चराः भूतोपसर्गाशुरयः प्रज्वारो द्विविधो
ज्वरः २३ एवं बहुविधैर्दुःखैर्दैवभूतात्मसंभवैः क्लिश्यमानः शतं वर्षं देहे देही तमोवृ
तः २४ प्राणेंद्रियमनोधर्मानात्मन्यध्यस्य निर्गुणः शेते कामलवान्ध्यायन्ममाहमिति
कर्मकृत् २५ यदात्मानमविज्ञाय भगवंतं परं गुरुम् पुरुषस्तु विषज्जेत गुणेषु प्रकृ
तेः स्वदृक् २६ गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः शुक्लं कृष्णं लोहितं वा यथाक
र्माभिजायते २७

न् अंधत्वादीनिंद्रियधर्मान् कामादीन्मनोधर्मांश्च निर्गुणोप्यात्मन्यध्यस्य कामलवान् विषयसु।
खलेशान् ध्यायन् कर्मकृत् २५ ततः किमत आह यदेति द्वाभ्याम् स्वदृक् स्वप्रकाशस्वभावोपि २६ शुक्लं सात्त्विकं कृ। स्कं०
ष्णं तामसं लोहितं राजसं यथा कर्म तथा जायते २७ ॥ श्रीसीतारामचंद्रः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तदेवाह शुक्लादिति द्वाभ्याम् प्रकाशो भूयिष्ठो येषु दुःखमुदर्क उत्तरफलं येषु क्रियया आयासो येषु तान् लोहितान् तमः शोकोत्कटौ येषु तान् कृष्णानिति ज्ञेयम् २८ नोभयं नपुंसकं यथाकर्मगुणावनतिक्रम्य २९ तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टांतमाह द्वाभ्यां क्षुधापरीतो व्याप्तः सारमेयः श्वा दंडं दंडेन ताडनम् ३० कामव्याप्त आशयो यस्य ३१ न

शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोति कर्हिचित् दुःखोदर्कान्क्रियायासांस्तमःशोकोत्कटान्क्वचित् २८ क्वचित्पुमान्क्वचिच्च स्त्री क्वचिन्नोभयमंधधीः देवो मनुष्यस्तिर्य्यग्वा यथाकर्मगुणं भवः २९ क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् चरन्विंदति यद्दिष्टं दंडमोदनमेव वा ३० तथा कामाशयो जीव उच्चावचपथा भ्रमन् उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ३१ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ३२ यथा हि पुरुषो भारं शिरसा गुरुमुद्वहन् तं स्कंधेन स आधत्ते तथा सर्वाः प्रतिक्रियाः ३३ नैकांततः प्रतीकारः कर्मणां कर्म केवलम् ॥ ननु हि

सुखस्य संभवात् दुःखस्य च प्रतीकारसंभवान्नैकांततो हेयत्वं तत्राह दुःखेष्विति दुःखस्य प्रतीकारस्तावन्नास्ति स्याच्चेत्तस्य प्रतिक्रिया तथापि त्रिविधेषु दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति ३२ प्रतिक्रियाणामपि दुःखरूपत्वादिति सदृष्टांतमाह यथा हीति ३३ दुःखस्य मूलभूतानि तु कर्माणि प्रतिक्रियादिकर्मभिर्नैव निवर्त्तंत इत्याह ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

नैकांततः असंतं सवासनं केवलं ज्ञानरहितं अविद्ययाउपसृतं प्राप्तं अतोः विरोधान्न निवर्त्यनिवर्त्तकमितिभावः
अत्र दृष्टांतः स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्नमसंतं न प्रतिकरोतीत्यर्थः ३४ ननु तर्हि अज्ञानविलसितत्वे
न संसृतिहेतोर्देहादेरप्यसत्वात् किं तन्निवर्त्तनप्रयासेन तत्राह अर्थेहीति लिंगरूपेण उपाधिभूतेन ३५ तदेवं संसृति
प्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह अथ तस्मात् पुरुषार्थभूतस्यैवात्मनः यतोऽज्ञानात् मनसो वा अनर्थपरंपरारूपा

ह्यपंत्यपि द्योपसृतं स्वप्ने स्वप्न इवानघ ३४ अर्थे त्वविद्यमानेपि संसृतिर्न निवर्त्तते
मनसा लिंगरूपेण स्वप्ने विचरतो यथा ३५ अथात्मनोऽर्थभूतस्य यतोऽनर्थपरंपा
रा संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ ३६ वासुदेवे भगवति भक्तियोगः समाहि
तः सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति ३७ सोऽचिरादेव राजर्षे स्यादच्युतकथा
श्रयः शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः ३८ यत्र भागवता राजन् साधवो विश
दाशयाः भगवद्गुणानुकथनश्रवणव्यग्रचेतसः ३९॥ ॥ संसृतिर्भवति तस्या व्यवच्छेदो गुरु
रूपे वासुदेवे भक्त्यैव ३६ ननु संसृतिनिवृत्तिर्वैराग्यपूर्वकात् ज्ञानादेव न तु भक्त्या तरति शोकमात्मविदित्यादिश्रुते
स्तत्राह वासुदेव इति सध्रीचीनेन समीचीनेन प्रकारेण ३७ नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह स तु अच्यु
तस्य कथामाश्रित्य वर्त्तमानोऽचिरात् स्यात् कस्य स्यात्तत्राह शृण्वतः अधीयानस्य च ३८ कुत्र स्यात्तत्राह यत्रेति भगवतो



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

ननुसत्संगमंतरेणस्वयमेवकथाचिंतनादिनाभक्तिर्भवेदेवेत्याशंक्याह द्वाभ्यां तस्मिन्स्थानेमहद्भिर्मुखरिताःकीर्तितामधुभिद्श्चरित्रमेवपीयूषंतदेवशिष्यत इतिशेषोयासुः असारांशरहितशुद्धामृतवाहिन्य इत्यर्थः अवितृषा अलंबुद्धिशून्याःसंतःगाढैःसावधानैःकर्णैर्यैताःसरितःपिबंतिसेवंते अशनशब्देन क्षुल्लक्ष्यते अशनादयस्तान्नस्पृशं

तस्मिन्महन्मुखरितामधुभिच्चरित्रपीयूषशेषसरितःपरितःस्रवंति तायेपिबंत्यवितृषोनृपगाढकर्णैस्तान्नस्पृशंत्यशनतृड्भयशोकमोहाः ४० एतैरुपद्रुतोनित्यंजीवलोकस्वभावजैः नकरोतिहरेर्नूनंकथाऽमृतविधौरतिम् ४१ प्रजापतिपतिःसाक्षाद्भगवान्गिरिशोमनुः दक्षादयःप्रजाध्यक्षानैष्ठिकाःसनकादयः ४२ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः भृगुर्वसिष्ठ इत्येतेमदंताब्रह्मवादिनः ४३ अद्यापिवाचस्पतयस्तपोविद्यासमाधिभिः पश्यंतोपिनपश्यंतिपश्यंतंपरमेश्वरम् ४४ शब्दब्रह्मणिदुष्पारेचरंतउरुविस्तरे ॥ न्तिभक्तिरसिकान्नबाधंत इत्यर्थः ४० सत्संगमंतरेणस्वयमेवकथाचिंतनादिनाबालस्यादिनारसावेशाभावात्क्षुत्पिपासाद्यभिभूतस्यभक्तिर्नसंभवतीत्याह एतैरिति ४१ भगवदनुग्रहमंतरेणनतुकस्यापिज्ञानसंभव इतिकैमुत्यन्यायेनाह चतुर्भिः प्रजापतिर्ब्रह्मा ४२ मदंताः अहंतारहोऽंतेयेषांते ४३ वाचांपतयोपिविद्यासमाधिभिरुपायैःपश्यंतोपिविचिन्वंतोपिपश्यंतंसर्वसाक्षिणंनपश्यंति ४४ कु

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अर्थतोपिपारशून्येतस्मिन्वर्त्तमानाः मंत्राणांलिंगैर्वज्रहस्तत्वादिगुणयुक्तविविधदेवताऽभिधानसामर्थ्यैः प।
रिच्छिन्नमेवेंद्रादिरूपंतत्त्वकर्माग्रहेणभजंतः परंपरमेश्वरंनविदुः ४५ तर्ह्यन्यः कोनामकर्मांध्यायहंहित्वापरमे
श्वरमेवभजेत् इतिअतआहयदायमनुगृण्हाति अनुग्रहेहेतुः आत्मनिभावितः सन्सतदालोकेलोकव्यवहा
रेवेदेचकर्ममार्गेपरिनिष्ठितांमतिंत्यजति ४६ अर्थकाशिषुपरमार्थत्वेनप्रकाशमानेषुपुरुषार्थबुद्धिमात्कथाः प्र
रोचनायकेवलंश्रोत्रप्रियेषुनस्पृष्टवस्तुषैः ४७ ननुवेदेनस्वर्गादिसाधनत्वेनोक्तानिकर्माणीतिवेदवादिनोवदंति

**मंत्रलिंगैर्व्यवच्छेदं भजंतोनविदुःपरम् ४५ यदायमनुगृण्हातिभगवानात्मभा।**
**वितःसजहातिमतिंलोकेवेदेचपरिनिष्ठिताम् ४६ तस्मात्कर्मसुबर्हिष्मन्नज्ञाना**
**दर्थकाशिषु माऽर्थदृष्टिंकृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ४७ स्वंलोकंनविदुस्तेवै।**
**यत्रदेवोजनार्दनः आहुर्धूम्रधियोवेदंसकर्मकमतद्विदः ४८ आस्तीर्यदर्भैःप्रागग्रैः**
**कार्त्स्न्येनक्षितिमंडलम् स्तब्धोबृहद्वधान्मानीकर्मनावैषियत्परम् तत्कर्महरितो।**
**षंयत्साविद्यातन्मतिर्यया ४९॥**

कथमस्पृष्टवस्तुषित्युच्यतेतत्राह येधूम्रधियोमलिनबुद्धयः
सकर्मकंकर्मपरंवेदमाहुस्तेअतद्विदः अवेदज्ञाः यतस्तेस्वंस्वरूपभूतंलोकमात्मतत्त्वंवेदनात्सर्वगोचरंनविदुः।
यत्रदेवोस्ति ४८ त्वंतुमहामूर्खइत्याह आस्तीर्येति बृहद्वधात् बहुपशुवधात्मानीमहायज्वाहमित्यहंकारी अतस्त
ब्धः अविनीतः सन्कर्मनावैषि परंविद्यास्वरूपंतत्त्वनवेत्सि नारदः स्वयंकृपयातद्द्वयंनिरूपयति हरिंतोषयतीति ४९

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कुतइत्यपेक्षायांहरेःपरमफलत्वंचदर्शयन्नाहद्वाभ्यांहरिर्देहभृतामात्माईश्वरश्चतत्रहेतुःस्वयंस्वातंत्र्येणप्रकृतिःकारणंअतस्तेषांतत्पादमूलमेवशरणंआश्रयःयतःयस्मिन् ५० नचतद्भजनेअन्यभजनइवदुःखंभयंचेत्याह सइति इतियोवेदसएवविद्वान्सगुरुरेवहरिश्च ५१ उक्तमुपसंहरति एवंभवतःप्रश्नःसंछिन्नःपरिहृतःतदेवमात्मनोबंधमोक्षप्रकारेतथारूपकेणकथितेऽपिनातिनिर्विण्णचित्तंपुत्रागमनंप्रतीक्षमाणंसंतंतत्क्षणमेवम

हरिर्देहभृतामात्मास्वयंप्रकृतिरीश्वरः तत्पादमूलंशरणंयतःक्षेमोनृणामिह ५०
सवैप्रियतमश्चात्मायतोनभयमण्वपि इतिवेदसवैविद्वान्योविद्वान्सगुरुर्हरिः ५१
नारदउवाच प्रश्नएवंहिसंछिन्नोभवतःपुरुषर्षभ अत्रमेवदतोगुह्यंनिशामय।
सुनिश्चितम् ५२ क्षुद्रंचरंसुमनसांशरणेमिथित्वारक्तंषडंघ्रिगणसामसुलुब्ध
कर्णम् अग्रेवृकानसुतृपोऽविगणय्ययातंपृष्ठेमृगंमृगयलुब्धकबाणभिन्नम्
॥५३॥

हाभयप्रकंपितसकलगात्रंगृहान्निर्वासयितुंहरिणरूपकमाह अत्रेति वदतोमेवचःशृणु ५२ क्षुद्र। मिलितमल्पंचरतीतितथातंअनुकूलमनसांपुष्पाणांशरणेआश्रमेवाटिकायांमिथित्वामिथःपरस्परंस्त्रियासहमिलित्वातत्रैवरक्तमासक्तंषडंघ्रयोभ्रमरास्तेषांसामसुगीतेषुलुब्धःकर्णोयस्यतंपरेषामसुभिर्दत्तैःस्वीयानसूंस्तर्पयन्तीत्यसुतृपः तानविगणय्यअगणयित्वालुब्धकस्यवाणेनभिन्नंमृगंमृगयान्वेषय ५३ ॥ ५३ ॥ २ ॥
०

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

भा० च० श्लोकंप्रस्तुतेयोजयन्व्याचष्टेक्षमनोभिःसमानोधर्मःपरिणामविरसत्वंयासांस्त्रीणांमिथित्वेत्यस्यव्याख्यामि
टी० थुनीभूयस्त्रीभिःसहेतिशेषःरक्तमित्यस्यव्याख्यातास्वभिनिवेशितंमनोयेन अक्षुद्रपइत्यस्यव्याख्या आयुर्हर
२९६ तइतियांतंइत्यस्यव्याख्याविहरंतमितिअंतःनलिकायांगूढेनशरेणपराविध्यंतिदूरादेवताडयति ५४उपदेश

क्षमनःसमानधर्मीणांस्त्रीणांशरणआश्रमेपुष्पमधुगंधवत्क्षुद्रतमंकाम्यकर्म-
विपाकजंकामसुखलवंजैह्व्यौपस्थ्यादिविचिन्वंतंमिथुनीभूयतदभिनिवेशित
मानसंषडंघ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलो
भितकर्णमग्रेवृकयूथवदात्मनआयुर्हरतोऽहोरात्रांतान्काललवविशेषानविगा-
णय्यगृहेषुविहरंतंपृष्ठतएवपरोक्षमनुप्रवृत्तोलुब्धकःकृतांतोऽतःशरेणयमिह
पराविध्यतितमिममात्मानमहोराजन्भिन्नहृदयंद्रष्टुमर्हसीति ५४सत्वंविचक्ष्य
मृगचेष्टितमात्मनोंतश्चित्तंनियच्छहृदिकर्णधुनींचचित्ते जह्यंगनाश्रममसत्तम
यूथगाथंप्रीणीहिहंसशरणंविरमक्रमेण ५५॥ सारमाह सइति विचक्ष्यविचार्यअंतर्हृदि।
चित्तंकर्णयोर्धुनींनदीमिवबहिर्वृत्तिंचित्तेनियच्छएतच्चसर्वेन्द्रियोपलक्षणार्थंगृहाश्रमंचजहिकीदृशंअसत्तमा
नांअतिकामुकानांयानियूथानितेषांगाथावार्तायस्मिन्हंसानांजीवानांशरणमीश्वरंएवंक्रमेणसर्वतोविरम ५५। रामः


CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अर्थांतरं प्रष्टुं पूर्वोक्तमर्थमनुवदति श्रुतमन्वीक्षितं विचारितं च ब्रह्मन् हे नारद एतत् त्वदुक्तमात्मतत्त्वं उपाध्यायाः
ये मम कर्मोपदेष्टारः आचार्यास्ते न जानंति ५६ अतस्तत्कृतः उपाध्यायकृतः तद्वाक्यविरोधेनात्मतत्त्वेऽसंभावनारू-
पो महान् संशयः संछिन्नः त्वया अत्र तु कश्चित्संशयो वर्त्तते यत्रेंद्रियवृत्तीनामप्रवृत्तेः मुह्यंति ५७ संशयमाह द्वाभ्या-
म् कर्माणि येन देहेन करोति तमत्रैव विहाय अमुत्र लोकांतरे कर्मोपस्थापितेनान्येन देहेन जुष्टानि उपभुक्तानि जी-

**राजोवाच श्रुतमन्वीक्षितं ब्रह्मन् भगवान् यदभाषत नैतज्जानंत्युपाध्यायाः किं न**
**ब्रूयुर्विदुर्यदि ५६ संशयोऽत्र तु मे विप्र संछिन्नस्तत्कृतो महान् ऋषयोऽपि हि मुह्यंति**
**यत्र नेन्द्रियवृत्तयः ५७ कर्माण्यारभते येन पुमानिह विहाय तम् अमुत्रान्येन देहे-**
**न जुष्टानि स यदश्नुते ५८ इति वेदविदां वादः श्रूयते तत्र तत्र ह कर्म यत् क्रियते प्रो-**
**क्तं परोक्षं न प्रकाशते ५९ श्रीनारद उवाच येनैवारभते कर्म तेनैवामुत्र तत्पुमान्॥**

वोऽश्नुते प्राप्नोति ५८ इति वादः श्रूयते पापपुण्यकृतां ल्लोकानिति शरीरजैः कर्मदोषैर्याति स्थावरतां नर इति त्वया चोक्तं
शाश्वतीरत्नु भूयाग्निमिति एतच्च कर्तृभोक्तृदेहभेदेन कृतनाशाकृताभ्यागमप्रसंगादसंगच्छत इति भावः संशयांत-
रमाह प्रोक्तं वेदोक्तं कर्म क्रियते जनैः तच्च निरंतरमेव परोक्षं अदृश्यं सन्न प्रकाशते अतः कर्मणो नष्टत्वात्तद्भोगोऽपि दुर्घ-
ट इति भावः ५९ प्रथमस्यैवोत्तरं येनैवेति अव्यवधानेन कर्तृभोक्तृदेहविच्छेदं विना स्थूलदेहनाशेऽपि मनः॥ छी ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

२९

भा०च० प्रधानस्यलिङ्ग·देहस्यानाशान्नोक्तदोषप्रसंगइत्यर्थः ॥६०॥ लिंगदेहविशिष्टस्यभोक्तृत्वंस्वप्नदृष्टांतेनस्पष्टयति शयानमि

टी० मंजाग्रद्देहंश्वसंतंजीवंतंउत्सृज्यतदभिमानंत्यक्त्वाआत्मनिमनसिसंस्काररूपेणाहितंकर्मयथाभुंक्ते तादृशेनशया

११७ नदेहसदृशेनकर्मोपस्थापितेनदेहेनान्येनवा ———————— पश्वादिदेहेनतथालोकांतरेपीतिभावः ॥६१॥ ननुभ

वतुनामलिंगविशिष्टस्यानेनदृष्टांतेनभोक्तृत्वंकर्तृत्वंतुदानप्रतिग्रहादिषुस्थूलदेहविशिष्टस्यैवदृश्यतेतत्राह म

मैतेपुत्रादयअसावहंब्राह्मणइतिब्रुवन्मनसाययद्देहंगृण्हीयात्तत्तोदेहाद्राद्धंसिद्धंकर्मपुमान्गृण्हीयात्येनक

भुंक्तेत्यव्यवधानेनलिंगेनमनसास्वयम् ॥६०॥ शयानमिममुत्सृज्यश्वसंतंपुरुषोयथा

कर्मात्मन्याहितंभुंक्तेतादृशेनेतरेणवा ॥६१॥ ममैतेमनसायद्यदसावहमितिब्रुवन्

गृण्हीयात्तत्पुमान्राद्धंकर्मयेनपुनर्भवः ॥६२॥ यथाऽनुमीयतेचित्तमुभयैरिंद्रियेहि

तैः एवंप्राग्देहजंकर्मलक्ष्यतेचित्तवृत्तिभिः ॥६३॥ नानुभूतंक्वचानेनदेहेनादृष्टमश्रु

र्मणाअहंकारगृहीतेनपुनर्भवोभवतिअन्यथाजन्मानुपपत्तेःअतोअभिमंतुर्मनोविशिष्टस्यैवक॥ तम्॥

र्तृत्वंअभिमानविषयस्यतुदेहस्यपुत्रादिदेहवद्द्वारमात्रत्वमितिभावः ॥६२॥ यदुक्तंकर्मणोनष्टत्वान्नामुत्रभोगइ

तितत्राह यथेतिउभयैर्ज्ञानकर्मरूपैरिंद्रियाणामीहितैःकदाचिच्चित्तवृत्तिभिश्चित्तमनुमीयतेसत्यपिसर्वेन्द्रिय॥

विषयसंबंधेयुगपज्ज्ञानानुत्पत्तेःतदुक्तमक्षपादेनयुगपज्ज्ञानानुत्पत्तिर्मनसोलिंगमितिएवंचित्तवृत्तिभिरपिपूर्व

देहजंकर्मलक्ष्यतेतासामपियुगपदनुत्पत्तेः ॥६३॥ इतोपिकर्मलक्ष्यतइत्याह नानुभूतमितिद्वाभ्याम्॥ ६॥ २॥

स्कं० ११७

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अनेनवर्त्तमानेनदेहेनक्वचकुत्रचिदपियन्नानुभूतंअननुभूतंअनुपभुक्तंअदृष्टंचाश्रुतंचयद्रूपंयदात्मिकंयादृ
क्यत्प्रकारकंचतत्कदाचित्स्वप्नमनोरथादिष्वात्मनिमनस्युपलभ्येत ६४ तेनहेतुनाअस्यलिंगिनोवासनाश्रय
स्यजीवस्यतादृशंतदनुभवादिसक्तंपूर्वदेहसंभवंश्रदृष्ट्वनिश्चयेनमन्यस्वनत्वननुभूतोर्थोमनःस्प्रष्टुंमनसिस्फु
रितुमर्हति ६५ किंचमनोवृत्त्यैवपूर्वापराणिशुभाशुभनिमित्तानिशरीराणिज्ञायंतइत्याह मनएवेति भद्रंतइतिसम्य
गवधानाशिषाभिनंदतिभविष्यतउद्भवंप्राप्स्यतः नभविष्यतःनीचत्वंप्राप्स्यतोपिभावीनिरूपाणिशंसतिमनएवोदा

कदाचिदुपलभ्येतयद्रूपंयादृगात्मनि ६४ तेनास्यतादृशंराजल्लिंगिनोदेहसंभवम् श्र
द्धस्वाननुभूतोर्थोनमनःस्प्रष्टुमर्हति ६५ मनएवमनुष्यस्यपूर्वरूपाणिशंसति भवि
ष्यतश्चभद्रंतेतथैवनभविष्यतः ६६ अदृष्टमश्रुतंचात्रक्वचिन्मनसिदृश्यते यथात
थाऽनुमंतव्यंदेशकालक्रियाश्रयम् ६७ सर्वेक्रमानुरोधेनमनसींद्रियगोचराः ॥६॥

हरणैःसूचयतीत्यर्थः ६६ ननुकदाचिदृष्टना
र्थ्यकार्थ्यण्यादिवृत्तिभिःपूर्वमप्येवमेवासीसश्चादृष्येवमेवभविष्यतीतिज्ञापयतीत्यर्थः ६६ ननुकदाचिदृर्थना
नर्हमपिस्वप्नेप्रतीयतेयथापर्वताग्रेसमुद्रःदिवानक्षत्राणिस्वशिरश्छेदइत्यादितत्राह अदृष्टमिति अन्यदेशा
श्रयंसमुद्रादिकंपर्वताग्रेनिशाश्रयंनक्षत्रादिकंदिवाअभ्यंगादिक्रियाश्रयंस्वशिरश्छेदनादिनिद्रादिदोषेणहि
यथाप्रतीयतइत्यनुमंतव्यंपरस्यापितदनुपपत्तेस्तुल्यत्वादितिभावः ६७ ननुदरिद्रःक्वचिदात्मानंमहाराजंपश्यति
तत्कथमसंभावितंसंगच्छेतत्तत्राह सर्वइति आयांतिभोग्यत्वेनप्राप्नुवंतियांतिगच्छंतिचभोगानंतरंयदिचकश्चिदृश

सर्वैर्मनस इति अतः सर्वेषां समनस्कत्वान्मनसि च सर्वार्थानां क्रमेण प्रवेशान्नात्यंतादृष्टचरः कस्यापि कश्चिद॰
र्थो नास्तीत्यर्थः ६८ तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यंत इत्युक्तं इदानीं युगपदपि सर्वदर्शनं कदाचिद्भवतीत्याह
सत्वैकनिष्ठे भगवत्पार्श्ववर्त्तिनि भगवद्ध्यानपरे मनसि इदं विश्वं उपरज्य संयोगमिव प्राप्यावभासते प्रतीत्यनर्हस्या॰
पि कदाचित्प्रतीतौ दृष्टांतः चंद्रमसि उपरज्य तमो राहुरिव तद्दिदृक्षुः नमनसि सर्वविषयस्फुरणं योगिप्रत्यक्षमिति प्रसि
द्धम् ६९ तदेवं स्थूलदेहनाशेपि लिंगदेहस्यानाशाद्न्यः कर्त्ता भोक्तेति दोषो नास्तीत्युक्तं तत्रैवं शंकते न नु लिंगदेहस्य

आयांति वर्गशो यांति सर्वैः समनसो जनाः ६८ सत्वैकनिष्ठे मनसि भगवत्पार्श्ववर्त्ति॰
नि तमश्चंद्रमसीवेदमुपरज्यावभासते ६९ नाहं ममेति भावोऽयं पुरुषे व्यवधीयते॥
यावद्बुद्धिमनोक्षार्थगुणव्यूहो ह्यनादिमान् ७० सुप्तिमूर्छोपतापेषु प्राणायनविघा॰
ततः नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ७१ गर्भे बाल्येऽप्यपौष्कल्यादेकादशवि॰

स्थूलदेहद्वारेणैव कर्त्तृत्वभोक्तृत्वेन तु केवलस्य तत्र कदाचित्स्थूलदेहाभावे जीवस्य कर्त्तृभोक्तृत्वा धं तदा॰
भावान्मुक्तिः प्रसज्येत तत्राह अहं ममेति भावः स्थूलदेहसंबंधः पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति किंपर्यंतं
बुद्ध्यादीनां व्यूहः परिणामो लिंगं यावदस्ति अनादिमान् अनादिः सन् ७० स्वापादावहंकाराद्यभावात्तद्विच्छेदमाशं॰
क्याह द्वाभ्यां सुप्त्यादिषु उपतापइष्टवियोगादिदुःखं तेषु अहमिति ज्ञानं अहंकारः नेहते न प्रकाशते प्राणायनानामिं॰
द्रियाणां विघातात् ७१ इंद्रियैरहंकारास्पदवस्तुग्रहणेप्यपौष्कल्यात् असंपूर्णत्वात् ॥ ॥ ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

प्राणायतनमितिशेषः यूनस्तरुणस्यएकादशविधं एकादशेंद्रियैः स्फुटं लिंगमहंकरणं तन्न दृश्यते गर्भादावितिशेषः सतोप्यनभिव्यक्तौ दृष्टान्तः कुहूममावास्यायां चंद्रमसो लिंगं रूपमिव ७२ तस्मादहंकारास्यस्य स्थूलदेहस्याविच्छेदादाहूस्तुभूतार्थाभावेऽपि संसृतिनिवृत्तिर्नास्तीत्याह अर्थे हीति ७३ यावल्लिंगं स्थूलदेहाविच्छेदात्संसारानिवृत्तिरित्यतस्तत्स्वरूपं चंयति एवमिति सार्द्धैस्त्रिभिः पंचविधं पंचतन्मात्रात्मकं त्रिवृत्त्रिगुणं षोडशविकारात्मना वि

लिंगं न दृश्यते यूनः कुह्वां चंद्रमसो यथा ७२ अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ७३ एवं पंचविधं लिंगं त्रिवृत्षोडशविस्तृतम् एष चेतनया युक्तो जीव इत्यभिधीयते ७४ अनेन पुरुषो देहानुपादत्ते विमुंचति हर्षं शोकं भयं दुःखं सुखं चानेन विंदति ७५ यथा तृणजलूकेयं नापयात्यपयाति च न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ७६ यावदन्यं न विंदेत व्यवधानेन कर्मणाम् मन एव मनुष्येंद्र भूतानां भवभावनम् ७७ ॥ ७ ॥

स्तृतम् ७४ । ७५ । नन्वेकं देहं विसृज्य देहांतरप्रवेशात्पूर्वं विदेहता स्यादेवेत्यत आह यथेति नापयाति पूर्वं तृणस्यात्यागात् अपयाति च तृणांतरधारणात् तथा प्राग्देहाभिमतिं न त्यजेन्म्रियमाणोऽपि ७६ अन्यं देहं कर्मणा प्राक्देहारंभकाणां व्यवधानेन विच्छेदेन समाप्त्या प्रकरणार्थमुपसंहरति मन एवेति भवभावनं संसारहेतुः ७७ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

कथंसतितदाह यदेति चरितान् उपभुक्तान् यतः कर्मणि सति नन्वसंगस्य कुतः कर्म तत्राह अविद्यायां सत्याम् अ
नात्मनो देहादेः कर्मणि बंधो भवति ७८ विश्वस्थित्यादयो यतो हरेर्भवंति ७९ हंसयो जीवेश्वरयोः ८० पुत्रानादिश्ये

यदाह्येष्वरिताध्यायन्कर्माण्याचिनुतेसकृत् सतिकर्मण्यविद्यायांबंधःकर्म्म
ण्यनात्मनः ७८ अतस्तदपवादार्थंभजसर्वात्मनाहरिम् पश्यंस्तदात्मकंविश्वं
स्थित्युत्पत्त्यप्ययायतः ७९ मैत्रेयउवाच भागवतमुख्यो भगवान्नारदोहंसयोर्ग
तिः प्रदर्श्यह्यमुमामंत्र्यसिद्धलोकंततोऽगमत् ८० प्राचीनबर्हीराजर्षिःप्रजा
सर्गाभिरक्षणे आदिश्यपुत्रानगमत्तपसेकपिलाश्रमम् ८१ तत्रैकाग्रमनाधीरो
गोविंदचरणांबुजम् विमुक्तसंगोऽनुभजन्भक्त्यातत्साम्यतामगात् ८२ एतदध्या
त्मपारोक्ष्यंगीतंदेवर्षिणाऽनघ यःश्रावयेद्यःशृणुयात्सलिंगेनविमुच्यते ८३ एत
न्मुकुन्दयशसाभुवनंपुनानंदेवर्षिवर्यमुखनिःसृतमात्मशौचम् यःकीर्त्यमानम
धिगच्छतिपारमेष्ठ्यंनास्मिन्भवेभ्रमतिमुक्तसमस्तबंधः ८४॥

ति पुत्राणामादेशं मंत्रि
णामग्रे कथयित्वा कपिलाश्रमं गंगासागरसंगमम् ८१।८२।८३ आत्मशौचं मनःशोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलं



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

स्त्रीबुद्धिस्तत्सहितस्याश्रमोऽहंकारः छिन्नोभवति अमुत्रकर्मफलभोगःकथमितिसंशयः छिन्नः ८५ ॥ इतिश्री
टीकायां एकोनत्रिंशोऽध्यायः २९ ॥ प्रसंगात्संचभिःप्रोक्तंवृत्तंप्राचीनबर्हिषः वर्ण्यतेचपुनर्द्वाभ्यांप्रस्तुतंतत्प्रचेत
साम् १ तत्रत्रिंशेतपस्तुष्टादीशाल्लब्धवरास्ततः आगत्यवार्क्षीमुद्वाह्यराज्यंचक्रुरितीर्यते २ हरिप्रतोष्यकासिद्धि

आध्यात्मपारोक्ष्यमिदंमयाऽधिगतमद्भुतम् एवंस्त्रियाश्रमःपुंसश्छिन्नोऽमुत्रच
संशयः ८५ ॥ इतिश्रीभा० च० विदुरमैत्रेयसंवादेप्राचीनबर्हिर्नारदसंवादोनाम
एकोनत्रिंशोध्यायः २९ विदुरउवाच येत्वयाऽभिहिताब्रह्मन्सुताःप्राचीनबर्हि
षः तेरुद्रगीतेनहरिंसिद्धिमापुःप्रतोष्यकाम् १ किंबार्हस्पत्येहपरत्रवाऽथकै
वल्यनाथप्रियपार्श्ववर्त्तिनः आसाद्यदेवंगिरिशंयदृच्छयाप्रापुःपरंनूनमथप्र
चेतसः २ मैत्रेयउवाच प्रचेतसोंऽतरुदधौपितुरादेशकारिणः जपयज्ञेनतपसापु
रंजनमतोषयन् ३ दशवर्षसहस्रांतेपुरुषस्तुसनातनः तेषामाविरभूत्कृच्छ्रंशांतेन
शमयन्रुचा ४

मापुः १ हेबार्हस्पत्यकस्यांचिद्विद्यायांबृहस्पतेःमैत्रेयःशिष्यइतिज्ञातव्यंतेयदृच्छया
गिरिशंप्राप्यतस्यैवंकैवल्यनाथप्रियस्यगिरिशस्यपार्श्ववर्त्तिनस्तदनुगृहीताःसंतोनूनंपरंमोक्षंप्रापुरेवततः
पूर्वंतुइह अथवापरत्रकिंप्रापुः २ रुद्रगीतजपरूपेणयज्ञेनतपसाचपुरंजनंहरिम् ३ तेषांकृच्छ्रंतपःक्लेशंरुचाकं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सुपर्णस्कंधमारूढइत्यादिना बर्हिष्मतःसुतानाहेतितृतीयेनान्वयः५कनकमयेनवर्णवताविभूषणेनभ्राजमानंकपोलंवदनंयस्यअष्टभिरायुधैःगरुडएवकिंनरःतेनपक्षस्वनैर्गीताकीर्त्तिर्यस्य६पीनाश्चतेआयताअष्टौभुजास्तेषांमंडलंसमूहःतन्मध्येस्थितयालक्ष्म्यास्पर्द्धमानाश्रीःशोभायस्याःतयावनमालयापरिवृतआद्यःपुरुषःआ

सुपर्णस्कंधमारूढोमेरुशृंगमिवांबुदः पीतवासामणिग्रीवःकुर्वन्वितिमिरादिशः ५ काशिष्णुनाकनकवर्णविभूषणेनभ्राजत्कपोलवदनोविलसत्किरीटः अष्टायुधैरनुचरैर्मुनिभिःसुरेंद्रैरासेवितोगरुडकिन्नरगीतकीर्त्तिः ६ पीनायताष्टभुजमंडलमध्यलक्ष्म्यास्पर्द्धच्छ्रियापरिवृतोवनमालयाद्यः बर्हिष्मतःपुरुषआहसुतान्प्रपन्नान्पर्जन्यनादरुतयासघृणावलोकः ७ श्रीभगवानुवाच वरंवृणीध्वंभद्रंवोयूयंमेनृपनंदनाः सौहार्देनापृथग्धर्मास्तुष्टोऽहंसौहृदेनवः ८ योनुस्मरतिसंध्यायांयुष्माननुदिनंनरः तस्यभ्रातृष्वात्मसाम्यंतथाभूतेषुसौहृदम् ९ येतुमांरुद्रगीतेनसायंप्रातःसमाहिताः स्तुवंत्यहंकामवरान्दास्येप्रज्ञांचशोभनाम् १०॥ हपर्ज

न्यस्यनादइवरुतंनादोयस्याःतयावाचासघृणोऽवलोकोयस्य७यूयंमेमत्तोवृणीध्वंसौहार्देनहेतुनाअपृथक्धर्मायेषांतेषांसंबोधनंभवःपरस्परंसौहृदेनतुष्टोहम्८भूतेषुसौहृदंचभविष्यति९तेभ्योदास्येकिंपुनर्युष्म



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अग्रहीष्ट गृहीतवंतः अथो इति हेतोः लोकाननु लोकेषु भविष्यति यद्वा लोकाननुभविष्यति द्रक्ष्यति व्याप्स्यती यश
र्थः ११ आत्मनो वीर्येण संतानेन १२ पुत्रार्थमादौ भार्यां संपादयति कंडोरिति त्रिभिः तपोनाशार्थं इंद्रप्रेषितया प्रम्लो
चया कंडुर्नाम ऋषिर्बहुकालं रेमे सा च ततः स्वर्गं गच्छंती कंडोर्जातं गर्भं वृक्षेषु न्यस्त्वाजगाम तदेतदुक्तं अपवि

**यद्यूयं पितुरादेशमग्रहीष्ट मुदान्विताः अथो वउशती कीर्तिर्लोकाननुभविष्यति ११ भविता विश्रुतः पुत्रोऽनवमो ब्रह्मणो गुणैः य एतामात्मवीर्येण त्रिलोकीं पूरयिष्यति १२ कंडोः प्रम्लोचया लब्धा कन्या कमललोचना तां चापविद्धां जगृहुर्भूरुहा नृपनंदनाः १३ क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् देशिनीं रोदमानाया निदधे सदयाऽन्वितः १४ प्रजाविसर्ग आदिष्टाः पित्रा मामनुवर्त्तता तत्र कन्यां वरारोहां तामुद्वहत मा चिरम् १५ अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा अपृथग्धर्मशीलेयं भूयास्तत्यर्पिताशया १६ दिव्यवर्षसहस्राणां सहस्रमहतौजसः ॥** उद्वांसक्तो

१३ स प्रसिद्धो वनस्पतीनां राजा सोमः अमृतस्राविणीं देशिनीं तर्जनीं रुदंत्यास्तस्या मुखे निदधे अनेनाप्सरोग
र्भसंभवेनामृताहारेण च तस्या लावण्यं क्षमस्वेद दौर्गंध्यादिराहित्यं चोक्तम् १४ मामनुवर्त्तमानेन पित्रादिष्टाः संतः
तत्र प्रजाविसर्गनिमित्ते तामुद्वहत १५ ननु बहूनां कथमेका भार्या स्यात्तत्राह अपृथग्धर्मः शीलं च येषां तेषां वः पत्नी भू

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अप्रतिहतबलाः संतः १७ पक्कगुणो दग्धकामादिमल आशयो येषाम् अतः लोकद्वयभोगान्निरयप्रायान्निर्विद्य मत्स्थानं प्राप्स्यथ १८ ननु गृहेषु प्रविष्टानामस्माकं तदासक्त्या बंध एव स्यात्कुतस्त्वद्भक्तिर्निर्वेदो वा तत्राह गृहेष्विति कुशलं मय्यर्पितं कर्म येषाम् मद्वार्त्तया यातो यामः कालो येषाम् १९ त्वद्वार्त्ताश्रोतृणां गृहैर्न बंध इति कुतस्तत्राह नव्यवदिति यद्यस्मात्कथाश्रवणाज्ज्ञः सर्वज्ञोहमीश्वरः ब्रह्मवादिभिः प्रवक्तृभिर्निमित्तभूतैः श्रोतृणां हृत् हृदयं नव्यवत्

**भौमान्भोक्ष्यथ भोगान्वै दिव्यांश्चानुग्रहान्मम १७ अथ मय्यनपायिन्या भक्त्या पक्कगुणाशयाः उपयास्यथ मद्धाम निर्विद्य निरयादतः १८ गृहेष्वाविशतां चापि पुंसां कुशलकर्म्मणाम् मद्वार्त्तायातयामानां न बंधाय गृहा मताः १९ नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद्ब्रह्मवादिभिः न मुह्यंति न शोचंति न हृष्यंति यतो गताः २० मैत्रेय उवाच एवं ब्रुवाणं पुरुषार्थभाजनं जनार्द्दनं प्रांजलयः प्रचेतसः तद्दर्शनध्वस्ततमोरजोमला गिरागृणन्गद्गद्या सुहृत्तमम् २१ प्रचेतस ऊचुः ॥**

ग्ग्नितिपदं नूतनवत् अयेप्राप्नोमि ब्रह्मसाक्षात्कारो भवतीत्यर्थः ननु त्वत्कथाश्रवणे कथं ब्रह्मसाक्षात्कारस्तत्राह यो हं एतदेव ब्रह्म तत्र हेतुः यतो गताः यं मां प्राप्ताः संतो मोहशोकहर्षान्न प्राप्नुवंति अतो मत्कथाश्रवणेन नव्यवन्मम तत्त्वाविर्भावादस्यैव ब्रह्मसाक्षात्कारत्वाद्गृहेषु वसतामपि न बंध इत्यर्थः २० पुरुषार्थभाजयति प्रापयतीति तथा तम् २१ ॥ २१ ॥ छ ॥ ॥ ॥ रामः ॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वेदैः सकलश्रेयः साधनत्वेन निरूपिता उदारगुणाः आह्वया नामानि यस्य मनोवचसोर्वेगादपि पुरोऽग्रतो जवो वेगो यस्य मनोवचसोरगोचरायेत्यर्थः अतएव सर्वेषामक्षाणां मार्गैः अगतः अनवगतो ध्वा यस्य तस्मै ते नमः २२ स्वनिष्ठया स्वरूपस्थित्या शुद्धाय अतः शांताय मनसि निमित्ते सति अपार्थं व्यर्थमेव विलसत् विस्फुरितं द्वयं रूपं यस्मिन् गृ

नमो नमः क्लेशविनाशनाय निरूपितोदारगुणाह्वयाय मनोवचोवेगपुरोजवाय स। र्वाक्षमार्गैरगताध्वने नमः २२ शुद्धाय शांताय नमः स्वनिष्ठया मनस्यपार्थं विलसद्द्व याय नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय २३ नमो विशुद्धसत्वाय ह रये हरिमेधसे वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् २४ नमः कमलनाभाय। नमः कमलमालिने नमः कमलपादाय नमस्ते कमलेक्षण २५ नमः कमलकिंज ल्कपिशंगामलवाससे सर्वभूतनिवासाय नमोऽयुंक्ष्महि साक्षिणे २६ रूपं भगवता त्वेतदशेषक्लेशसंक्षयम् आविष्कृतं नः क्लिष्टानां किमन्यदनुकंपितम् २७॥

गृहीता मा यागुणैर्विग्रहाः ब्रह्मादिमूर्त्तयो येन २३ स्वतस्तु विशुद्धसत्वरूपाय संसारं हरति मेधा ज्ञानं यस्य तस्मै २४।२५ अ युंक्ष्महि कृतवंतो वयं २६ यदुक्तं वरं वृणीध्वमिति तन्मनसि निधायाहुः रूपमिति समस्तानां क्लेशानां संक्षयो यस्मात् नः आविष्कृतं प्रकटितं अतोऽन्यत् किमनुकंपितं अनुकंपा द्वयमेवास्माकं परमानुकंपेत्यर्थः २७॥ २७ ॥ ६॥

कुत इत्यत आह हे अभद्ररंधन अमंगलनाशन त्वया प्रसयोत्र न विवक्षित एतावदेव दीनेषु वत्सलैः प्रभुभिर्भाव्यं कार्यं किं तत्तदाह यदिति अस्मदीया एत इति बुध्या उचिते काले अनुस्मर्य्यत इति यत् त्वयानुरूपं दर्शितमिति भावः २८ येनानुस्मरणेन स्मरतानां तेषामुपशांतिः सुखं भवति किंच क्षुल्लकानामपि भूतानां अंतर्हृदये अंतर्हितः अंतर्यामित्वेन स्थितो भवानीहतामिच्छतां क्षुद्रोपासकानां नोऽस्माकमाशिषः कस्माद्धेतोर्न वेद जानात्येवेत्यर्थः २९ तथापि वक्तव्यं चेत्तर्हि येषामस्माकं भगवान् प्रसन्नः असावेव वरः भगवत्प्रसाद एवास्माकमीप्सितो वर इत्यर्थः अपवर्ग

**एतावदेव प्रभुभिर्भाव्यं दीनेषु वत्सलैः यदनुस्मर्य्यते काले स्वबुध्याऽभद्ररंधन रूद्ये। नोपशांतिर्भूतानां क्षुल्लकानामपीहताम् अंतर्हितोऽन्तर्हृदये कस्मान्नो वेद नाऽऽशिषः २९ असावेव वरोऽस्माकमीप्सितो जगतः पते प्रसन्नो भगवान्येषामपवर्गगुरुर्गतिः ३० वरं वृणीमहेथापि नाथत्वत्परतः परात् नह्यंतस्त्वद्विभूतीनां सोऽनंत इति गीयसे ३१ पारिजातेऽञ्जसा लब्धे सारंगोऽन्यन्न सेवते॥**

३२ गुरुर्मोक्षमार्गप्रदर्शकः गतिः स्वतश्च पुरुषार्थभूतः ३० यद्यप्येवं अथापि हे नाथ त्वत्तः वरमेकं वृणीमहे कथंभूतात्परतः कारणादपि परात्। अक्षरात्परतः पर इति श्रुतेः अतो यद्यपि त्वं दातुं समर्थः नच देयानां त्वद्विभूतीनामंतोस्ति यतोऽनंत विभूतित्वादनंत इति गीयसे ३१ तथाऽपि सारंगो भ्रमरः पारिजाते सुखेन लब्धे सति सुलभमप्यन्यद्वृक्षांतरं न सेवते तथा वयमपि साक्षात्त्वदंघ्रिमूलं प्राप्य कं वृणीमहि न किंचिदित्यर्थः यद्वा किमप्यत्यच्छं किमर्थं वृणीमहि यद्वा यदि वृणीमहि तर्हि किं किं

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

अनंतत्वेन मनोरथानां अनवस्थानादित्यर्थः ३२ अत एतावदेव प्रार्थयामह इत्याहुः यावदिति स्पृष्टाः व्याप्ताः संतः भगवति प्रकृष्टः संगो येषां तेषां संगोऽस्माकं स्यात् ३३ ननु राज्यभोगान् स्वर्गापवर्गौ च विहाय किमिदं प्रार्थ्यते तत्राहुः तुलयामेति भगवत्संगिनां संगस्य लवेनापि ३४ सत्संगस्य श्रैष्ठ्यं प्रपंचयति यत्रेति त्रिभिः यत्र येषु यतः

त्वदंघ्रिमूलमासाद्य साक्षात् किं किं वृणीमहि ३२ यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः तावत् भवत्प्रसंगानां संगः स्यान्नो भवे भवे ३३ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् भगवत्संगिसंगस्य मर्त्यानां किमुताशिषः ३४ यत्रेड्यंते कथा मृष्टास्तृष्णायाः प्रशमो यतः निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ३५ यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः संस्तूयते सत्कथासु मुक्तसंगैः पुनः पुनः ३६ तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया भीतस्य किं न रोचेत तावकानां समागमः ३७ वयं तु साक्षाद्भगवन्भवस्य प्रियस्य सख्युः क्षणसंगमेन सुदुश्चिकित्सस्य भवस्य मृत्योर्भिषक्तमं त्वाऽद्य गतिं गताः स्म ३८ ॥

याभ्यः कथाभ्यः निर्वैरं वैराग्यभावः ३५। ३६ पद्भ्यां पावनेच्छया संसारात् भीतस्य ३७ सत्संगफलमस्माभिरेवानुभूतमित्याहुः वयं त्विति वयः प्रियः सखा तस्य भवस्य अत्यंतमचिकित्स्यस्य भवस्य जन्मनो मृत्योश्च भिषक्तमं सद्वैद्यं त्वा इति त्वां गतिं प्राप्ताः ३८ ॥ ३८ ॥ ६ ॥ ६ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

वरांतरंवृणुतेयन्न इति द्वाभ्यांनताःनमस्कृताः ३९ निरंधसांनिरन्नानांअदभ्रंबहुकालंतेपरितोषणायभवति
तिवृणीमहे ४० अज्ञानामप्यस्माकंत्वत्स्तुतिर्नायुक्तेत्याहुर्मनुरितियस्यतवमहिम्नोनदृष्टंपारंयैस्तेऽपित्वांआत्म
समंस्वशक्त्यनुरूपंयथास्तुवंतिअथोअतःवयमपिगृणीमः ४१ सत्वमूर्त्तयेवासुदेवाय ४२ यानंस्वप्रयाणंअनि

यन्नःस्वधीतंगुरवःप्रसादिताविप्राश्चवृद्धाश्चसदाऽनुवृत्या आर्यानताःसुहृदोभ्रा
तरश्चसर्वाणिभूतान्यनसूययैव ३९ यन्नःसुतप्तंतपएतदीशनिरंधसांकालमद
भ्रमप्सु सर्वंतदेतत्पुरुषस्यभूम्नोवृणीमहेतेपरितोषणाय ४० मनुःस्वयंभूर्भग
वान्भवश्चयेऽन्येतपोज्ञानविशुद्धसत्वाः अदृष्टपाराअपियन्महिम्नःस्तुवंत्यथोत्वा
त्मसमंगृणीमः ४१ नमःसमायशुद्धायपुरुषायपरायच वासुदेवायसत्वायतुभ्यंभ
गवतेनमः ४२ मैत्रेयउवाच इतिप्रचेतोभिरभिष्टुतोहरिःप्रीतस्तथेत्याहशरण्यव
त्सलः अनिच्छतांयानमतृप्तचक्षुषांययौस्वधामाऽनपवर्गवीर्य्यः ४३ अथनिर्या
यसलिलात्प्रचेतसउदन्वतः वीक्ष्यकुप्यन्द्रुमैश्छन्नांगांगांरोद्धुमिवोच्छ्रितैः ४४ ॥ ६ ॥

च्छतामपिसतांस्वधामययौभक्तहृदयंविवेशअनपवर्गवीर्यःअकुंठितप्रभावः ४३ उदन्वतःसिंधोःसलिला
न्निर्यायनिर्गत्यगांस्वर्गंरोद्धुमिवउच्छ्रितैर्द्रुमैर्गांमहींछन्नांवीक्ष्यद्रुमेभ्योऽकुप्यन्तदाहिप्राचीनबर्हिषःप्रव्रजितत्वा



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

निरस्तावीरुधोपियस्यास्तथाभूतां कर्तुं संवर्त्तकः कालाग्निरुद्रः ४५ नयैर्युक्तिभिः ४६ उज्जह्रुः समर्पयामासुः। ४७ मारिषां वार्क्षीं अजनयो निर्ब्रह्मा तस्माज्जातो दक्षः महतः श्रीमहादेवस्यावज्ञानात् पूर्वमजनयो निजो ब्रह्मपुत्रोऽपि सन् क्षत्रियजातीयस्यामजनि जातः ४८ प्राक्सर्गे पूर्वदेहे कालेन विद्रुते दैवेनेश्वरेण चोदितः सन् इष्टाः प्रजाः स-

ततोऽग्निमारुतौ राजन्नमुञ्चन्मुखतो रुषा मही निर्वीरुधं कर्तुं संवर्त्तकइवात्यये। ४५ भस्मसात्क्रियमाणांस्तान् द्रुमान्वीक्ष्य पितामहः आगतः शमयामास पुत्रान्बर्हिष्मतो नयैः ४६ तत्रावशिष्टा ये वृक्षा भीता दुहितरं तदा उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयंभुवा ४७ ते च ब्रह्मण आदेशान्मारिषामुपयेमिरे यस्यां महदवज्ञानादजन्यजनयोजिनः ३८ चाक्षुषे त्वंतरे प्राप्ते प्राक्सर्गे कालविद्रुते यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ४९ यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन् ५० तं प्रजासर्गरक्षायामनादिरभिषिच्य च युयोज युयुजेऽन्यांश्च सर्वे सर्वप्रजापतीन् ५१ ॥ इतिश्री० चतु० त्रिंशोध्यायः ३० ॥ ३० ॥ सर्ज दक्षइति प्रसिद्धः

४९ स्वया रुचा प्रभया तेज उपादत्त आच्छादितवान् यं च कर्मसाक्ष्याद्दक्षमब्रुवन् ५० तमभिषिच्य अनादिर्ब्रह्मा प्रजासर्गरक्षायां युयोज स च दक्षोऽन्यान्मरीच्यादीन् तत्तद्व्यापारेषु नियुक्तवान् ५१ ॥ इति चतुर्थे टीकायां त्रिंशोध्यायः ३०

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

एकत्रिंशे कृते दक्षे पुत्र्यां स्ववने सताम् नारदोक्तेन मार्गेण मुक्तिरुक्ता प्रचेतसाम् १ ततः दिव्यवर्षसहस्राणां सहस्रांते उत्पन्नविवेकज्ञानास्ते उपयास्यथ मद्धाम निर्विद्य निरयाद्गृतः इत्यधोक्षजभाषितं स्मरंत आश्रमाद्व्रजन् १ ब्रह्मसत्रेण आत्मविमर्शेन दीक्षिताः कृतसंकल्पा बभूवुः सर्वेषु भूतेषु आत्मेति मेधा ज्ञानं यस्मिन् तेन नक्ववेलायां समुद्रतटे

मैत्रेय उवाच ततउत्पन्नविज्ञाना आश्वधोक्षजभाषितम् स्मरंत आत्मजे भार्यां विसृज्य प्राव्रजन्गृहात् १ दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः २ तान्निर्जितप्राणमनोवचोदृशो जितासनाञ्छान्तसमानविग्रहान् परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ३ तमागतं त उत्थाय प्रणिपत्याभिनंद्य च पूजयित्वा यथादेशं सुखासीनमथाब्रुवन् ४ प्रचेतस ऊचुः स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः तव चंक्रमणं ब्रह्मन्नभयाय यथा रवेः ५ यदादिष्टं भगवता शिवेनाऽधोक्षजेन च तद्गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो ६ तन्नः प्रद्योतयाध्यात्मज्ञानं तत्त्वार्थदर्शनम् येनांजसा तरिष्यामो दुस्तरं भवसागरम् ७ ॥ ८॥

जाजलिर्नाम ऋषिः २ निर्जिताः प्राणमनोवचोदृशो यैस्तान् शांताः उपरताः समाना मूलाधारादारभ्य ऋजवो विग्रहा येषां ब्रह्मणि योजित आत्मा यैः सुरासुरैरीड्यः दृष्टवान् ३ उत्थाय तं प्रणिपत्य यथादेशं यथाविधि पूजयित्वा ४। ५ आदिष्टमुपदि



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

इतिप्रचेतोभिःपृष्टः ८ अहोगृहप्रसक्त्याहरिसेवांविनासर्वंजन्मकर्मादिकंव्यर्थीकृतमितितान्शोचन्नाह तज्जन्मे
तिचतुर्भिःयतोजन्मादेर्हरिसेवैवफलंअतस्तद्विहीनंसर्वंव्यर्थमित्यर्थः ९ शुक्लसंबंधिजन्मविशुद्धमातापितृभ्यामु
त्पत्तिःसावित्रमुपनयनेनयाज्ञिकंदीक्षयाविबुधानामिवदीर्घायुषाअपि १० वचोभिःवाग्विलासैःचित्तवृत्तिभिः ना
ना॰बधानसामर्थ्यैः इंद्रियाणांराधसापाटवेन ११ योगेनप्राणायामादिनासांख्येनदेहादिव्यतिरिक्तात्मज्ञानमात्रेणसं

मैत्रेयउवाच इतिप्रचेतसांपृष्टोभगवान्नारदोमुनिः भगवत्युत्तमश्लोकआविष्टात्मा
ब्रवीन्नृपान् ८ श्रीनारदउवाच तज्जन्मतानिकर्माणितदायुस्तन्मनोवचः नृणांयेनेह
विश्वात्मासेव्यतेहरिरीश्वरः ९ किंजन्मभिस्त्रिभिर्वेहशौक्लसावित्रयाज्ञिकैः कर्मभि
र्वात्रयीप्रोक्तैःपुंसोपिविबुधायुषा १० श्रुतेनतपसावाकिंवचोभिश्चित्तवृत्तिभिःबुद्ध्या
वाकिंनिपुणयाबलेनेंद्रियराधसा ११ किंवायोगेनसांख्येनन्यासस्वाध्याययोरपि किं
वाश्रेयोभिरन्यैश्चनयत्रात्मप्रदोहरिः १२ श्रेयसामपिसर्वेषामात्माह्यवधिरर्थतः॥ ९

न्यासवेदाध्ययनाभ्यामपि अन्यैरपिव्रतवैराग्यादिभिः श्रेयःसाधनैः १२ नन्वेषांनाना फलसाधनानांहरिसेवाया
अभावमात्रेणकुतोवैयर्थ्यंतत्राह श्रेयसांफलानामात्मैवअवधिः पराकाष्ठाअर्थतःपरमार्थतःआत्मार्थत्वेनै
नान्येषांप्रियत्वादित्यर्थः भवतुआत्माअवधिःहरेःकिमायातंतत्राह सर्वेषामपीति आत्माआत्मरश्चाविद्यानि

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

रासेन स्वरूपाभिव्यंजकः ऐश्वरेणापि रूपेण बलिप्रभृतिभ्य इवात्मप्रदः प्रियश्च परमानंदरूपत्वात् १३ किंच नाना॰
कर्मभिस्तत्तद्देवताप्रीतिनिमित्तान्यपि फलानि हरिप्रीत्या भवंति केवलं तत्तद्देवताराधनेन तु किंचिदिति सदृष्टान्त
माह यथेति मूलात्प्रथमविभागाः स्कंधाः तद्विभागा भुजाः तेषामपि उपशाखाः उपलक्षणम् पत्रपुष्पादयोपि तृप्यंति
न तु मूलमेकं विना ताः स्वस्वनिषेचनेन प्राणस्योपहारो भोजनं तस्मादेवेन्द्रियाणां तृप्तिः न तु तत्तदिंद्रियेषु पृथक् पृथ
गन्नालेपनेन तथाच्युताराधनमेव सर्वदेवताराधनं न पृथगित्यर्थः १४ कुतः सर्वमूलत्वादिति सदृष्टान्तमाह यथैव

सर्वेषामपि भूतानां हरिरात्मात्मदः प्रियः १३ यथा तरोर्मूलनिषेचनेन तृप्यंति तत्स्कंध भुजोपशाखाः प्राणोपहाराच्च यथेंद्रियाणां तथैव सर्वार्हणमच्युतेज्या १४ यथैव सूर्यात्प्रभवंति वारः पुनश्च तस्मिन्प्रविशंति काले भूतानि भूमौ स्थिरजंगमानि तथा हरावेव गुणप्रवाहः १५ एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितुर्यथा प्रभा॥ १६॥

वारः जलानि वर्षाकाले सूर्यादुद्भवंति ग्रीष्मे तस्मिन्नेव प्रविशंति अस्य प्रसिद्धत्वेन दृष्टांतांतरमाह यथा भूतानि॰
भूमाविति गुणप्रवाहः चेतनाचेतनात्मकः प्रपंचः १५ ननु हरावेव गुणप्रवाह इत्युक्ते तदाधारत्वेन सोपाधिकत्वं हरेः
स्यादित्याशंक्याह एतदिति एतद्विश्वं जगदात्मनः विष्णोस्तत्सर्वशास्त्रप्रसिद्धम् परं पदं सर्वोपाधिरहितं तदुत्पन्न॰
त्वान्न ततः पृथगित्यर्थः तर्हि कथमन्यथा भाति तत्राह सकृदिति सकृत्कदाचिद्विभातं स्फुरितं गंधर्वनगरवत् यथा स
वितुः प्रभा न ततो भिन्ना यथा च जाग्रति असवः इंद्रियाणि स्फुरन्ति॥



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

सुषुप्तौतुसुप्तशक्तयोभवंतीत्यर्थः कथंभूतोसौहरिः द्रव्यादीनांत्रिविधाहंकारकार्याणांतन्निमित्तस्यभेदभ्रमस्य-
चात्ययोयस्मात्सः यद्वा अजागृतिसुषुप्तौअसवःसुप्ताःशक्तयोयेषांतेभवंतिद्रव्यादेरप्यत्ययोभवतिसवितुः प्रभेयु
इतोदृष्टांतइति १६ नन्वसंगेहरौकथंप्रपंचोत्पत्तिप्रलयौतत्राह यथेति अभ्रंतमःप्रकाशाआगमापायिनोरजस्त
मःसत्वस्थानीयाःहेभूपाःप्रचेतसःअमूःशक्तयःउद्भवंतिनभवंतिलीयंतइति एवमयंजगत्प्रवाहः १७ तेनसर्वेका

यथाऽसवोजागृतिसुप्तशक्तयो द्रव्य क्रियाज्ञानभिदाभ्रमात्ययः १६ यथानभस्यभ्र
तमःप्रकाशाभवंतिभूपानभवंत्यनुक्रमात् एवंपरेब्रह्मणिशक्तयस्त्वमूरजस्तमःस
त्वमितिप्रवाहः १७ तेनैकमात्मानमशेषदेहिनांकालंप्रधानंपुरुषंपरेशम् स्व-
तेजसाध्वस्तगुणप्रवाहमात्मैकभावेनभजध्वमद्धा १८ दयया सर्वभूतेषुसंतुष्ट्याये-
नकेनवा सर्वेन्द्रियोपशांत्याचतुष्यत्याशुजनार्दनः १९ अपहतसकलैषणामलात्म-
न्यविरतमेधितभावनोपहूतः॥ रणत्वेनहेतुनाकालोनिमित्तंप्रधानमुपादानंपुरुषःकर्ताएतत्त्रि
तयात्मकत्वात्सर्वकारणंपरमीश्वरं अद्धासाक्षाद्भजध्वंकथंआत्मनाएकभावेनअभिन्नत्वेन १८ साधनमाह दया
दिभिःशीघ्रंतुष्यति १९ ततोनकस्यचित्त्यजतीत्याह अपहतानिरस्ताःसकलाएषणाःकामायस्मात्सचासावमल
आत्मामनःतस्मिन्सतांमनसिनिरंतरंसमेधितयाभावनयोपहूतःसंनिधापितःअक्षरोहरिःछिद्रवत्॥ ॥

CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

तत्रत्याकाशवत् ततोनसरतिनाप यातिहि किंकुर्वन् आत्मनोनिजवशगत्वंस्वभक्ताधीनत्वमयन् अवगच्छन्
२० सतामेववश्योऽसौअसतांतुपूजामपिनगृह्णातीत्याह नेतिकुमनीषिणांकुत्सितमतीनांअधनाश्चतेआत्मध
नाश्च भगवद्धनास्तेप्रियायस्यरसज्ञः भक्तिरूरवज्ञः केकुमनीषिणस्तानाह श्रुतादिनिमित्तैर्मदैर्येसत्कृपामंतिर

निजजनवशगत्वमात्मनोऽयंनसरतिछिद्रवदक्षरः २० नभजतिकुमनीषिणांसइ
ज्याम् हरिरधनात्मधनप्रियोरसज्ञः श्रुतधनकुलकर्मणांमदैर्येविदधतिपापम
किंचनेषुसत्कृ २१ श्रियमनुचरतींतदर्थिनश्च द्विपदपतीन्विबुधांश्चयत्स्वपूर्णः न
भजतिनिजभृत्यवर्गतंत्रःकथममुमुद्विसृजेत्पुमान्कृतज्ञः २२ मैत्रेयउवाच इतिप्र
चेतसोराजन्नन्याश्चभगवत्कथाः श्रावयित्वाब्रह्मलोकंययौस्वायंभुवोमुनिः २३ ते
पितन्मुखनिर्यातंयशोलोकमलापहम् हरेर्निशम्यतत्पादंध्यायंतस्तद्गतिंययुः २४॥
एतत्तेऽभिहितंक्षत्तर्यन्मांत्वंपरिपृष्टवान् प्रचेतसांनारदस्यसंवादंहरिकीर्त्तनम् २५

स्कारंकुर्वंति २१ भक्ताधीनत्वंप्रपंचयन्नाह अनुवर्त्तमानामपिश्रियंतदर्थिनःसकामान् द्विपदपतीन्नरेंद्रान्
विबुधान्देवानपियोनानुवर्त्ततेयतःस्वेनैवपूर्णःअतःस्वभृत्यवर्गानुरक्तएवएवंभूतममुमुद्विसृजेत् ईषदपिक
थंपरित्यजेत् २२ प्रचेतसःकर्मभूतान् अन्याश्चनूतंस्कृनीतेरित्यादिध्रुवचरिताद्याः सत्रेअगायत्प्रचेतसामित्युक्त



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

 यएववंशः सोऽनुवर्णितः २६ यः प्रियव्रतः २७।२८।२९ स्वान्ज्ञातीन्दिदृक्षुः ३० राज्ञांचरितमितिशेषः ३१॥ इति



श्रीशुकउवाच यएषउत्तानपदोमानवस्यानुवर्णितः वंशः प्रियव्रतस्यापिनिबोध नृपसत्तम २६ योनारदादात्मविद्यामधिगम्यपुनर्महीम् भुक्त्वाविभज्यपुत्रेभ्यऐश्वरं समगात्पदम् २७ इमांतुकौषारवि णोपवर्णितां क्षत्तानिशम्याजित वार्त्तत्कथाम् प्रवृद्धभावोऽश्रुक लाकुलोमुनेर्दधारमूर्ध्नाचरणंहृ दाहरेः २८। श्रीविदुरउवाच सोऽ यमद्यमहायोगिन्भवताकरुणा त्मना दर्शितस्तमसःपारोयत्रा किंचनगोहरिः २९ शुकउवाच॥ इत्यानम्यतमामंत्र्यविदुरोगज साह्वयम् स्वानांदिदृक्षुःप्रययौ ज्ञातीनांनिर्वृताशयः ३० एतद्यःशृणुयाद्राजन्राज्ञांहर्य्यर्पितात्मनाम् आयुर्धनंय शःस्वस्तिगतिमैश्वर्यमाप्नुयात् ३१॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेअ ष्टादशसाहस्र्यांसंहितायांप्राचेतसोपाख्यानंनामैकत्रिंशोऽध्यायः ३१॥ ॐ श्रीभागवतभावा र्थदीपिकायांश्रीधरस्वामिविरचितायांचतुर्थस्कंधटीकायांएकत्रिंशोऽध्यायः ३१॥ इतिचतुर्थस्कंधःसमाप्तः र्थमः



CC-0.Courtesy Shri K.S.Parihar and Dwivedi Ji District Library Varanasi. Digitized by eGangotri

